

# ॥ श्रीरुद्रभाष्यम् ॥

श्रीमत्परमहंसपरिव्राजकसार्वभौम

श्रीमदद्वैतमतप्रतिष्ठापन

**श्रीमदभिनवशंकराचार्यैः**

विरचितम् ।



श्रीरङ्गनगरे

**श्रीवाणीविलासमुद्रायन्त्रालये**

संमुद्रितम् ।

१९१३.

# PREFACE.

THIS excellent commentary was printed some time ago in Grantha characters by the late Mahâmahôpâdhyâya Vedântakêsari Brahmaṣrî Gaṇapati Ṣâstrigaḷ of Pañgânâd. Since it is more elaborate and helpful than that of the famous Ṣrî Vidyâraṇya and since it even criticises the latter in some places, I thought it could be very usefully included among the Sastra Booklets that are issued from the Sri Vani Vilas Press and thus made available for a larger Public. The author of the commentary is stated to be one Abhinava Ṣañkara whose identity is not quite clear. But I am led to consider him as one with the Guru of Veñkatanâtha, the author of Brahmânandagiri—the most excellent commentary on the Bhagavad Gita, published some months ago in the Sri Vani Vilas Sastra series. Veñkatanâtha speaks of his Guru as Abhinava Ṣañkara Râma Brahmânanda and mentions a work named Pâshaṇdagajakêsari as his. This commentator also is named as Ahbinava Ṣañkara and he also mentions the above work as his (vide p. 77). It is quite probable that the two Abhinava Ṣañkaras were one and the same and that Veñkatanâtha wrote a commentary on the Pâshaṇdagajakesari of his Guru.

These are but surmises and we have to rest satisfied with them till any manuscript of Pâshaṇdagajakêsari is found out. I would be very thankful if any of the numerous readers of this book who come across such a manuscript, kindly send the same to me.

T. K. Balasubrahmanyam



# ॥ श्रीरुद्रभाष्यम् ॥



## उपोद्घातः ॥

---

ईशानः सर्वविद्यानामीश्वरो निखिलात्मनाम् ।
जयत्वखण्डसर्वज्ञो जगदादिगुरुः शिवः ॥ १ ॥

प्रसाधितयजुःशाखं प्रपद्ये शतरुद्रियम् ।
सारमुद्धृत्य रुद्राणां सम्यग्व्याख्या विधीयते ॥ २ ॥

भसितकवचितानां बद्धरुद्राक्षदाम्ना-
ममृतकिरणमौलेरङ्घ्रिमूले स्थितानाम् ।
प्रतिदिनशतरुद्रप्रश्नशुद्धाशयाना-
ममरपतिनुतानामस्मि दासानुदासः ॥ ३ ॥

इह किल श्रुतिस्मृतीतिहासपुराणप्रसिद्धमेव श्रीरुद्रोपनिषदः सर्ववेदोत्तमत्वम् । तथा हि जाबालोपनिषदि तावत्—

'अथ हैनं ब्रह्मचारिण ऊचुः, किं जप्येनामृतत्वं ब्रूहि' इति मोक्षसाधनजप्यप्रश्ने 'स होवाच याज्ञवल्क्यः शतरुद्रीयेणेति एतानि ह वा अमृतस्य नामधेयानि एतैर्ह वा अमृतो भवति' इति शतरुद्रीयशब्दवाच्यश्रीरुद्रोपनिषदः प्राधान्येन मोक्षसाधनत्वं प्रतिपाद्यते । शतं रुद्रा देवता अस्येति शतरुद्रियम्; 'सास्य देवता' इत्यधिकारे 'शतरुद्राद्घश्च' इति सूत्रेण शतरुद्रशब्दाद्देवतार्थे घप्रत्ययस्य चकारेण छप्रत्ययस्य च विधानेन शतरुद्रियं शतरुद्रीयमिति रूपद्वयस्य वैयाकरणैर्व्युत्पादनात् । शतपदं चानन्त्यपरम्, 'शतमनन्तं भवति' इति श्रुतेः, 'विश्वं शतं सहस्रं च सर्वमक्षय्यवाचकम्' इति महाभारतवचनाच्च । अनन्ताश्चेह रुद्राः प्रतिपाद्यन्ते, 'सहस्राणि सहस्रशो ये रुद्रा अधिभूम्याम्' 'ये चेमां रुद्रा अभितो दिक्षु श्रिताः सहस्रशः' इति श्रवणात् । मन्त्रप्रतिपाद्यतया तेषां देवतात्वम्, 'मन्त्रवाच्यार्थो देवता' इति निरुक्तकारवचनात् । यद्वा रुद्रस्येदं रुद्रीयम्; 'वृद्धाच्छः' इति छप्रत्ययः; तथा घप्रत्ययश्च, केवलादपि रुद्रशब्दात्संबन्धार्थेषु घप्रत्ययस्य 'या ते अग्ने रुद्रिया तनूर्यथातोकायम्' इत्यादिषु दर्शनात् । एवं च रुद्रीयपदं रुद्रसंबन्धि श्रीरुद्रोपनिषत्परम्; शते शाखासु पठ्यते रुद्रीयं शतरुद्रीयम् । तदुक्तं

स्कान्दे सूतसंहितायाम्— 'शतशाखागतं साक्षाच्छतरुद्रीयमुत्तमम् । तस्मात्तज्जपमात्रेण सर्वपापैः प्रमुच्यते' इति । भट्टभास्करेणाप्युक्तम्— 'एकशतं यजुःशाखास्तासु रुद्रोपनिषदाम्नायते' इति । अथवा रुद्रस्येमानि रुद्रीयाणि रुद्रनामधेयानि, शतमनन्तानि रुद्रनामधेयानि यस्मिंस्तच्छतरुद्रीयम्; तदिदमुक्तम्— 'एतानि ह वा अमृतस्य नामधेयानि' इति । उक्तं च कूर्मपुराणे भगवतैव— 'इमानि मे रहस्यानि नामानि शृणु चानघ' इति। भारते च द्रोणपर्वणि शतरुद्रीयाध्यायो वर्ण्यते । तत्र हि 'नामधेयानि लोकेऽस्मिन् बहून्यस्य यथार्थवत्' इति परमेश्वरनामानन्त्यं प्रतिज्ञाय 'वेदे चास्य समाम्नातं शतरुद्रीयमुत्तमम्' इति वेदगतशतरुद्रीयाम्नातं तदुपपादकत्वेनोदाहृतम् । तेन च रुद्रनामानन्त्यं शतरुद्रीयपदप्रवृत्तिनिमित्तमित्युक्तं भवति । न च परमेश्वरनामत्वेन नैघण्टुकादिभिरननुशिष्टानां कथं तन्नामत्वमिति वाच्यम्, 'एतानि ह वा अमृतस्य नामधेयानि' इति साक्षाद्वेदेनोक्तस्यार्थस्य निघण्ट्वनुक्त्या परित्यागायोगात्, 'इमानि मे रहस्यानि नामानि' इति कूर्मपुराणवचनेन वेदरहस्यनामधेयतयावगतत्वेन तेषु नैघण्टुकापरिग्रहस्यान्यथासिद्धत्वाच्च । लोकप्रसिद्धकाव्यनाटकादिप्रयुक्तकति-

पयनाममात्रसंग्राहिणो हि नैघण्टुकाः, न वेदरहस्येषु व्याप्रियन्ते । दृश्यन्ते हि नैघण्टुकैरपरिगृहीतान्येतादृशानि परःसहस्रं वैदिकनामधेयानि; यथा 'तदिति ह वा एतस्य महतो भूतस्य नाम भवति' 'एतद्वा अपां नामधेयं गुह्यं यदाधावाः' 'तस्योदिति नाम' इत्यादीनि । न ह्येतेषु नैघण्टुकापरिग्रहस्तन्नामत्वमपनेतुं प्रभवति; प्रत्युत वेदरहस्यत्वमेव तेषामुपोद्बलयति । 'ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति 'आतानतप्ता इव धावसंघाः' इत्यादिभारतवचनप्रयोगात्तेषां तन्नामत्वमवगम्यत इति चेत्, अहो देवानांप्रियस्य श्रद्धा, योऽयं वेदोक्तमश्रद्दधानः केनचिदितिहासपुराणवचनेन तदभ्युपगच्छति । अस्ति च तादृशं भारतवचनम्—'नामधेयानि लोकेऽस्मिन् बहून्यस्य यथार्थवत् । वेदे चास्य समाम्नातं शतरुद्रीयमुत्तमम्' इति प्रागुदाहृतम् । सन्ति च प्रत्येकमपि प्रयोगाः, 'हरिकेशस्तथेत्युक्त्वा दीर्घदर्शितया प्रभुः' 'न ते गिरित्राखिललोकपालविरिञ्चिवैकुण्ठसुरेन्द्रगम्यम्' 'ततो मीढ्वां समामन्त्र्य' 'ततो मीढुष्टमोदितम्' इत्यादिभारतभागवतवचनेषु श्रीरुद्राम्नातहरिकेशमीढुष्टमादीनां प्रयोगात् । तस्मादेतादृशेषु नामसु न नैघण्टुकानां संबन्धोऽस्तीत्यास्तां तावत् । प्रस्तुतमेव रुद्रा-

ध्यायस्य महिमानमनुसरामः । यद्यपि 'स होवाच याज्ञवल्क्यः शतरुद्रीयेण' इत्युक्त्या शतरुद्रीयस्य मोक्षसाधनजप्यत्वमात्रं प्रतिपाद्यते, तथापि प्रश्नोत्तरस्वरूपपर्यालोचनया तस्य सर्वोपनिषदुत्तमत्वं प्रतिपाद्यत इति ब्रूमः । तथा हि—औपनिषद्ब्रह्मात्मतत्त्वज्ञानैकसाध्यं मोक्षं प्रति अन्वयव्यतिरेकाभ्यामुपनिषदां साधनत्वात् मोक्षसाधनजप्यान्युपनिषद इति वस्तुस्थितिः । सा च ब्रह्मचारिभिर्वस्तुस्थितिर्यद्यवगता, तदा प्रश्नासंगतिः; न ह्युपनिषदां मोक्षसाधनजप्यत्वावगमे जाते 'किं जप्येनामृतत्वम्' इति पुनः प्रश्नो घटते । यदि च नावगता, तदा 'शतरुद्रीयेण' इत्युत्तरं न संगच्छते । न ह्युपनिषदां मोक्षसाधनजप्यत्वं वस्तुवृत्तमनवगत्य 'किं जप्येनामृतत्वम्' इति प्रश्ने शतरुद्रीयेणेत्युत्तरं संगच्छते; किं तु उपनिषदस्तथेत्येव तदुत्तरं युक्तम् । अन्यथा 'विशेषग्रहणं शेषप्रतिषेधार्थम्' इति न्यायेन शतरुद्रीयातिरिक्तानामुपनिषदां मोक्षसाधनजप्यत्वाभावप्रसङ्गात् । यथा खलु को वास्मिन्ग्रामे पण्डित इति प्रश्ने, देवदत्तः पण्डित इत्युक्ते हि तद्व्यतिरिक्तानां यज्ञदत्तादीनामपण्डितत्वं भवति, तद्वत् । तस्मादित्थं प्रश्नोत्तरयोः सामानाधिकरण्यं वक्तव्यम्— सामान्येनोप-

निषन्मात्रं मोक्षसाधनजप्यमिति निश्चित्य, तन्मध्ये किमुत्तमं जप्यमिति प्रश्नः; तथाभूतं शतरुद्रीयमिति 'शतरुद्रीयेण' इत्युत्तरं चेति । अत एव कथं शतरुद्रीयस्य सर्वोपनिषदुत्तमत्वमिति शङ्कायाम् 'एतानि ह वा अमृतस्य नामधेयानि' इत्यादिना तदुपपाद्यते । एतानि शतरुद्रीयाम्नातानि अमृतस्य नित्यमुक्तस्य परमेश्वरस्य नामधेयानि— इत्यर्थः । अस्तु; ततः किम्? अत्राह—'एतैर्ह वा अमृतो भवति', ह वा इत्येतदवधारणार्थे, एतैरेव नामधेयैर्मुक्तो भवति; तिष्ठत्वेतत्प्रतिपाद्यब्रह्मात्मतत्त्वानुसंधानम् । एतद्गतानि परमेश्वरदिव्यनामान्येव केवलं जपमात्रेणैव मोक्षप्रदानि; उपनिषदन्तरे तु नैवम्; अतः सर्वोपनिषदुत्तमत्वमस्येति भावः । 'एतानि ह वा' इत्यनेन शतशाखागतत्वप्रसिद्धिः सूच्यते । तेन चायमर्थः प्रदर्शितो भवति । यद्यपि सर्वाण्यपि परमेश्वरस्यैव नामधेयानि— अत एव 'इमा रुद्राय स्थिरधन्वने गिरः' इति श्रुतिः प्रत्यक्षसंनिधापितसकलशब्दराशेः परमेश्वराभिधानत्वं प्रतिपादयति; अत एवाश्वलायनेन शिवं प्रस्तुत्योक्तम् 'सर्वाणि ह वा एतस्य नामधेयानि' इति— तथापि शतशाखाम्नातत्वेन मोक्षसाधनत्वेन च प्रसिद्धतया मुख्यत्वादेतानि नामधेयानीत्युक्तिरुपपद्यते, 'षट्त्रिंशदहो वा

एष यज्ञो यद्द्वादशाहः' इति षट्त्रिंशताहोभिः साध्यस्यापि क्रतोः द्वादशसुत्याहानि मुख्यानीति द्वादशाहव्यपदेशवदिति। सोऽयमर्थः सर्वोऽपि कूर्मपुराणे दर्शितः । तत्र हि वसुमनसो राजर्षेः ब्रह्मवरलब्धसाग्रसंवत्सरशतानुष्ठितगायत्र्युपासनया प्रसन्नं परमेश्वरं प्रस्तुत्येदं पठ्यते— 'तदा प्राह महादेवो राजानं प्रीतमानसः । इमानि मे रहस्यानि नामानि शृणु चानघ । सर्ववेदेषु गीतानि संसारशमनानि च । नमस्कुरुष्व सततमेभिर्नामपदैः शुचिः । अध्यायं शतरुद्रीयं यजुषां सारमुत्तमम् । जपस्वानन्यचेतस्को मय्येवासक्तमानसः । ब्रह्मचारी मिताहारो भस्मनिष्ठः समाहितः । जपेदामरणाद्रुद्रं स याति परमां गतिम्' इति। अत्र 'यजुषां सारम्' इति यजुःसारत्वेनैव यजुर्वेदोत्तमत्वे सिद्धे पुनरुत्तमपदमृग्वेदाद्यपेक्षया उत्तमत्वपरम् । एवं च सर्ववेदोत्तमं शतरुद्रीयमध्यायं जपेदिति विधिः । तेन 'स होवाच याज्ञवल्क्यः' इति श्रुतिसाराभिप्रायो दर्शितः । तत्र कथं सर्ववेदोत्तमत्वमित्याकाङ्क्षायां तदुपपादनाय 'संसारशमनानि' इति नामविशेषणम् । न केवलं जपमात्रतः संसारमोचकमदीयनामनिकुरुम्बकरम्बितत्वमात्रेणास्य सर्ववेदोत्तमत्वम्, किं तु तादृशमदीयनमस्कारकरम्बितत्वेनापीत्यभिप्रायेणोक्तम्— 'नम-

स्कुरुष्व सततमेभिर्नामपदैः’ इति । नमस्कारघटिततत्तन्नामपदात्मकतत्तन्मन्त्रजपस्य वाचिकमदीयनमस्काररूपत्वात् जपं कुर्वंस्त्वं नमस्कारानपि कृतवान्भवेरित्यर्थः । तथा च केवलनामधेयान्येव संसारनाशकानि, तैर्नमस्कारोऽपि चेत्, किमु वक्तव्यम्; संसारदुःखमुन्मूलयन्तीत्यभिप्रायः। तदनेन ‘एतैर्ह वा अमृतो भवति’ इति श्रुतिभागो व्याख्यातः। ‘इमानि मे नामानि’ इत्यनेन च ‘एतानि ह वा अमृतस्य नामधेयानि’ इत्यंशो व्याख्यायते। अत्रैतानीत्यस्य प्रतिपदम् इमानीति । अमृतशब्दार्थप्रदर्शनं मे इति । सर्ववेदेषु गीतानीत्यनेन ‘एतानि ह वै’ इति निपातनार्थः शतशाखाम्नातत्वरूपा प्रसिद्धिर्दर्शिता। रहस्यानीत्यनेन वेदरहस्येऽर्थे नैघण्टुकाद्यप्रसिद्धिकृतकानवकाश इत्युक्तम् । अनघेत्यनेन च साग्रवर्षशतानुष्ठितगायत्र्युपासनापरिक्षीणपापस्य तव रुद्राध्याये निरवग्रहोऽधिकार इत्युक्तं भवति। तथा च जपमात्रेण मोक्षदातर्यस्मिन् सत्यप्यश्रद्धादोषेण लोकः संसारे मज्जति; अहो पापमहिमेति भावः । तेन च ब्रह्मोत्तरखण्डे कथा स्मार्यते। तत्र हि—श्रीरुद्रजपादखिलेषु पातकेषु नष्टेषु जगति पापिष्ठस्यैवाभावात् निरधिकारवैवस्वतचित्रगुप्तादिभिर्विज्ञापितेन ब्रह्मणा नियोजिताभ्यामश्रद्धादुर्मे-

धाभ्यामुपहतो लोकः श्रीरुद्रविमुखो जात इत्युपाख्यायते । एतानि वचनान्यनुपदमेवोदाहरिष्यामः । तस्मादेतत्स्थितम् , एतत् कूर्मपुराणोपबृंहितजाबालोपनिषद्रुद्राध्यायस्य सर्ववेदोत्तमत्वं प्रतिपादयतीति । सोऽयमर्थः पण्डितानां हृदयंगम एव । 'जाबालोपनिषत्साध्वी मम ज्ञानस्य सिद्धये । प्रधानसाधनान्याह प्राणिनामादरेण तु । अविमुक्तं मम क्षेत्रं मन्नाम परमं शुभम् । शतरुद्रीयजापित्वं तथा संन्यासमुत्तमम्' इति पराशरोपपुराणवचनान्यत्र उपबृंहणम् , शतरुद्रीयस्य ज्ञानं प्रति साधनत्वं जाबालश्रुत्यर्थ इति कण्ठरवेणैवाभिधानात् । तत्र च 'मन्नाम परमम्' इत्यविमुक्तस्य विशेषणं प्रणवाख्येन मन्नाम्ना परममुत्कृष्टमित्यर्थः, 'अत्र हि जन्तो प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे' इति श्रुतेः । एवं चोपासनानां मध्ये अविमुक्तोपासनम् , जप्यानां मध्ये शतरुद्रीयम् , आश्रमाणां मध्ये संन्यासश्च ज्ञानमुख्यसाधनमिति प्रतिपादयद्भगवतः पराशरस्य वचनं सर्ववेदोत्तममिति दर्शयति ; तदुपबृंहितजाबालश्रुतिस्तत्र प्रमाणम् । एवं कैवल्योपनिषद्यपि ब्रह्मविविदिषयोपसन्नमाश्वलायनं प्रति परमेष्ठिना ब्रह्मात्मतत्त्वमुपदिश्य तत्साधनत्वेनेदमाम्नायते— 'यः शतरुद्रीयमधीते सोऽग्निपूतो भवति सुरापानात्पूतो भवति

ब्रह्महत्यात्पूतो भवति कृत्याकृत्यात्पूतो भवति तस्मादविमुक्तमाश्रितो भवत्यत्याश्रमी सर्वदा सकृद्वा जपेत् अनेन ज्ञानमाप्नोति संसारार्णवनाशनम्' इति । अत्र संसारतारणज्ञानकामः शतरुद्रीयं जपेदिति प्रथमो विधिः । तत्र च कर्मोपासनज्ञानकाण्डात्मके वेदराशौ सर्वमन्यत्परित्यज्य शतरुद्रीयस्य ज्ञानसाधनत्वोपदेशे को हेतुरित्याशङ्क्य सर्ववेदोत्तमत्वं वक्तुं प्रथमं कर्मकाण्डापेक्षया तस्योत्तमत्वं प्रतिपादयति— 'यः शतरुद्रीयम्' इत्यादिना 'कृत्याकृत्यात्पूतो भवति' इत्यन्तेन । एतच्च सूतसंहितायामुपबृंहितम्— 'यः श्रद्धया युतो नित्यं शतरुद्रीयमभ्यसेत् । अग्निदाहात्सुरापानादकृत्याचरणात्तथा । मुच्यते ब्रह्महत्याया इति कैवल्यशाखिनः' इति । अत्राकृत्याचरणादित्यनेन 'कृत्याकृत्यात्पूतः' इति व्याख्यातम् । कृत्यवदाचरितं यदकृत्यं तत्कृत्याकृत्यम्, अकृत्याचरणमिति यावत्; तस्मात्पूतो भवतीति तदर्थः । तथा च रुद्राध्यायी न केवलं ब्रह्महत्यासुरापानमात्रात्पूतो भवति, किं तु सर्वस्मादपि पापादिति श्रुत्यभिप्रायः प्रदर्शितो भवति । ब्रह्मोत्तरखण्डे चायमर्थः प्रपञ्चेनोपपादितः । तत्र हि—'सर्गात्पुरा निरालोके पदे तन्निष्कलं परम् । चिदानन्दमयं ज्योतिः स आत्मा केवलः शिवः ॥ स एवादौ रजोरूपं सृष्ट्वा ब्रह्मा-

णमात्मनः । सृष्टिकर्मनियुक्ताय तस्मै वेदांश्च दत्तवान् । पुनश्च जगतामीश आत्मतत्त्वैकसंग्रहम् ॥ सर्वोपनिषदां सारं रुद्राध्यायं च दत्तवान् । स एष मुनिभिः पूर्वैर्मरीच्यत्रिपुरोगमैः ॥ स ह देवैर्धृतस्तेभ्यस्तच्छिष्या जगृहुः शतम् । एष वः परमो मन्त्र एष वः परमं तपः ॥ रुद्राध्यायजपः पुंसां परं कैवल्यसाधनम् । ये महापातकैर्युक्ता उपपातकिनश्च ये ॥ रुद्राध्यायजपात्सद्यस्तेऽपि यान्ति परां गतिम्' इति प्रस्तुत्यैव पठ्यते— 'पुण्यकर्मफलं स्वर्गो नरकस्तद्विपर्ययः । तयोर्द्वावधिपौ धात्रा कृतौ शतमखान्तकौ । कामः क्रोधश्च लोभश्च मदमानादयस्तथा । अधर्मस्य सुता आसन्सर्वे नरकनायकाः ॥ क्रोधात्पितृवधो जातस्तथा मातृवधोऽपरः । ब्रह्महत्या तु कन्यैका पश्चात्समभवत्ततः ॥ गुरुतल्पः सुरापानस्तथान्यत्पुल्कसीगमः । कामस्य तनया ह्येते प्रधानाः परिकीर्त्तिताः ॥ देवस्वहरणं चैव ब्रह्मस्वहरणं तथा । सुवर्णस्तेय इत्येते लोभस्य तनयाः स्मृताः ॥ एतानाहूय चण्डालान्यमः पातकनायकः । नरकस्य विवृद्ध्यर्थं पट्टबन्धं चकार ह ॥ ते यमेन समादिष्टाः सर्वे पातकनायकाः । नरकान्पूरयामासुः स्वभृत्यैश्चोपपातकैः ॥ रुद्राध्याये भुवं प्राप्ते साक्षात्कैवल्यसाधने । भीताः प्रदुद्रुवुः

सर्वे ते वै पातकनायकाः ॥ यमे विज्ञापयामासुः सह तैश्चोपपातकैः । नरकस्य विवृद्ध्यर्थं साधिकारा-स्त्वया कृताः ॥ अधुना वर्तितुं लोके न शक्ताः स्मः स्वयं प्रभो । रुद्रजाप्यप्रभावेन निर्दग्धाश्चैव विद्रुताः ॥ ग्रामे ग्रामे नदीतीरे पुण्येष्वायतनेषु च । रुद्रजाप्येन पर्याप्ते कथं परिचरेमहि ॥ प्रायश्चित्तसहस्रं वा गणयामो न किंचन । रुद्रजाप्यं क्षणेनापि सोढुं शक्ता वयं न च ॥ महापातकमुख्यानामस्माकं सोपजीविनाम् । रुद्रजाप्यं परं घोरं रुद्रजाप्यं महद्विषम् ॥ इति विज्ञापितः साक्षाद्यमः पातकनायकैः । ब्रह्मणोऽन्तिकमासाद्य तस्मै सर्वं व्यजिज्ञ-पत् ॥ इति विज्ञापितो धाता यमेन परिखिद्यता । रुद्रजा-प्यविघातार्थमुपायं पर्यकल्पयत् ॥ अश्रद्धां चैव दुर्मेधामवि-द्याया उभे सुते । श्रद्धामेधाविघातिन्यौ मर्त्येषु समचोद-यत् ॥ ताभ्यां विमोहिते लोके रुद्राध्यायपराङ्मुखे । यमः स्वस्थानमासाद्य कृतार्थ इव सोऽभवत्' इति । एवं पुरा-णान्तरेष्वपि सर्वत्रायमर्थः सूचितः; तत्सर्वं विस्तरभयान्न लिख्यते ॥

इत्थं श्रुतिसिद्धं पुराणैश्चोपबृंहितं रुद्राध्यायस्य निखिल-पातकप्रायश्चित्तत्वं स्मृतिकारा अपि स्मरन्ति । यथा—

'मद्यं पीत्वा गुरुदारांश्च गत्वा स्तेयं कृत्वा ब्रह्महत्यां च कृत्वा । भस्मच्छन्नो भस्मशय्याशयानो रुद्राध्यायी मुच्यते सर्वपापैः' इति शातातपस्मृतिवचनम् । 'एकादशगुणान्वापि रुद्रानावृत्य धर्मवित् । महापापैरपि स्पृष्टो मुच्यते नात्र संशयः' इत्यत्रिस्मृतिवचनम् । 'सुरापी स्वर्णहारी च रुद्रजापी जले स्थितः । सहस्रशीर्षजापी च मुच्यते सर्वकिल्बिषैः' इति याज्ञवल्क्यस्मृतिवचनम् । 'वेदमेकगुणं जप्त्वा तदह्नैव विशुध्यति । रुद्रैकादशिनीं जप्त्वा तत्क्षणादेव शुध्यति' इति स्मृतिवचनम् । एवमन्यान्यप्युदाहरणीयानि । तदेवम् 'यः शतरुद्रीयमधीते सोऽग्निपूतो भवति कृत्याकृत्यात्पूतो भवति' इति शतरुद्रीयस्य सकलपापनिवर्तकत्वोक्त्या कर्मकाण्डोत्तमत्वं दर्शितं भवति— ज्ञानापेक्षितचित्तशुद्धिजनकत्वेन हि कर्मकाण्डस्य ज्ञानोपकारकत्वम्, सा च कर्मकाण्डोक्तसर्वकर्मानुष्ठानजन्यपापनिवृत्तिरूपा चित्तशुद्धिरेकस्मादेव रुद्रजपात्सिध्यतीति तस्य कृत्स्नकर्मकाण्डोत्तमत्वसिद्धिरिति । न च श्रीरुद्रस्य कर्मकाण्डफलभूतचित्तशुद्धिजनकत्ववत् तत्फलभूतस्वर्गादिजनकत्वाभावात्कथं तदपेक्षयोत्तमत्वमिति वाच्यम् । 'वृक्षस्य मूलसेकेन शाखाः पुष्यन्ति वै यथा । शिवे रुद्रजपात्प्रीते

प्रीता एवास्य देवताः ॥ अतो रुद्रजपादेव भुक्तिमुक्ती प्रसिध्यतः' इति सूतसंहितोक्तरीत्या परमेश्वरं प्रीणयतः श्रीरुद्राध्यायिनस्तदवयवेन्द्राग्न्यादिप्रीतिफलभूतस्वर्गादितुच्छफलापेक्षासत्त्वे तेषामेव फलानामहमहमिकया स्वत एव पुरतोऽवस्थानस्य 'यद्यदिच्छञ्जपेत्तत्तदाप्नोति हि न संशयः' 'तदेतत्पापक्षयार्थी व्याधिमोचनार्थी श्रीकामः शान्तिकाम आयुष्काम आरोग्यकामश्च कुर्यादेतत्सर्वमाप्नोति' इत्यादिवचनसिद्धत्वात्; 'शतरुद्राञ्जपेद्यस्तु ध्यायमानो महेश्वरम् । यश्च सागरपर्यन्तां सशैलवनकाननाम् ॥ दद्यात्काञ्चनसंयुक्तां भूमिमोषधिसंयुताम् । तस्मादप्यधिकं तस्य सकृद्रुद्रजपाद्भवेत्' इत्यादिशैवपुराणवचनैः श्रीरुद्रजपस्य प्रतिपदोक्ततत्तत्कर्मफलाधिकफलजनकत्वप्रतिपादनाच्च । तस्मात्सिद्धं श्रीरुद्रस्य कृत्स्नकर्मकाण्डफलजनकत्वेन तदुत्तमत्वम् । अत एव खल्वग्निहोत्रदर्शपूर्णमासपशुचातुर्मास्यज्योतिष्टोमसहस्रसंवत्सररूपसर्वकर्मणामपि फलतः श्रीरुद्रान्तर्भावेन तदङ्गत्वमभिप्रेत्य श्रीरुद्रलघुन्यासे 'अग्निहोत्रात्मने हृदयाय नमः' इत्यादिना तेषां तदङ्गकोटौ निवेशः कृत इत्यास्तां तावत् । प्रस्तुतमेवानुसरामः ॥

इत्थं शतरुद्रीयस्य कर्मकाण्डोत्तमत्वमुक्तम् । इदानीमु-

पासनाकाण्डोत्तमत्वमाह— 'तस्मादविमुक्तमाश्रितो भवति' इति । तस्मादित्यनेन 'शतरुद्रीयमधीते' इति पूर्ववाक्योक्तं शतरुद्रीयाध्ययनं परामृश्यते; तथा चायमर्थः— शतरुद्रीयाध्ययनात्तस्मादविमुक्तमाश्रितो भवतीति । अविमुक्ताश्रयणरूपं तदुपासनं कृतवान्भवतीति ; अविमुक्तोपासनाफलं प्राप्नोतीति यावत् । अनेनोपासनाकाण्डोत्तमत्वं सिध्यति । तथा हि जाबालोपनिषदि— 'तस्मादविमुक्तं निषेवेत' इत्यविमुक्तोपासनम् 'प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृती भूत्वा मोक्षी भवति' इति तत्फलं चोक्तम् । तत्राविमुक्तोपासनं द्विविधम्— आध्यात्मिकमाधिभौतिकमिति; तत्र भ्रुवोर्घ्राणस्य च यः संधिस्तस्मिन्संधावीश्वरोपासनं त्वाध्यात्मिकम्, काश्यामविमुक्तक्षेत्रे परमेश्वरदर्शनमाधिभौतिकमिति शास्त्रव्यवस्था । तदेतद्विविधोपासनफलमपि तारकब्रह्मविद्याख्यमात्मतत्त्वज्ञानं श्रीरुजद्रपमात्रेणानायासेन भवति, न त्वविमुक्तोपासनायामिवायासो भवति । अविमुक्तोपासने काशीमरणं विना तारकब्रह्मविद्या न लभ्यत इति तदर्थं प्रयासोऽपेक्षितः । आध्यात्मिके तु यद्यपि काशीमरणापेक्षा नास्ति, 'तस्माद्यत्र त्वेव गच्छति तदेव मन्यत इतीदं वै कुरुक्षेत्रं

देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनमत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृती भूत्वा मोक्षी भवति' इति श्रुतेः; तथापि जपापेक्षयाविमुक्तोपासनायामस्त्येव भूयान्प्रयासः । अत एव जाबालोपनिषदि अविमुक्तोपदेशानन्तरं चित्तैकाग्र्यादिप्रयाससाधनमुपासनं कर्तुमशक्त्या केवलं जपमात्रेण मोक्षमिच्छतां ब्रह्मचारिणाम् 'किं जप्येनामृतत्वम्' इति प्रश्ने 'शतरुद्रीयेण' इत्युत्तरम्, 'एतैरेवामृतो भवति' इति तदुपपादनं च कृतं प्रदृश्यते । तथा चाध्यात्मिकाविमुक्तोपासनापेक्षयानायासेनैव तत्फलदं शतरुद्रीयमिति तत्तस्य तदुत्तमत्वं सिध्यत्सर्वोपासनोत्तमत्वरूपमेव सिध्यति । सर्वासामुपासनानां चित्तैकाग्र्यक्लेशसाध्यतयानायासेनैव तत्फलजनकस्य श्रीरुद्रस्य सर्वोपासनाकाण्डोत्तमत्वलाभात् । एवं च सर्वाण्युपासनानि कृतवान्भवतीति वक्तव्ये 'अविमुक्तमाश्रितो भवति' इति विशिष्याविमुक्तग्रहणं जाबालोपनिषद्यविमुक्तश्रीरुद्रयोरपि ज्ञानसाधनत्वोपदेशात्तयोस्तुल्यत्वमुत्तानदृष्ट्या प्राप्यत इति तन्निवारणाय तदपेक्षया उत्तमत्वं प्रदर्शयितुमिति सर्वमतिरमणीयम् ॥

इत्थमुपासनाकाण्डोत्तमत्वमुक्तम् । ज्ञानकाण्डोत्तमत्व-

माह—'अत्याश्रमी सर्वदा सकृद्वा जपेत् अनेन ज्ञानमाप्नोति संसारार्णवनाशनम्' इति। अत्र 'सर्वदा सकृद्वा जपेत्' इति विकल्पेन श्रीरुद्रस्य सकृज्जपादपि ज्ञानलाभोक्त्या तस्य ज्ञानकाण्डोत्तमत्वमुक्तं भवति; 'ज्ञानकाण्डो ह्युपनिषदः, ताश्च ज्ञानार्थमावर्तनीया इत्यावृत्त्यधिकरणे व्यवस्थापितम्। तथा चावर्तनीयत्वेन सर्वदा जप्याज्ज्ञानकाण्डात्सकृज्जपेन ज्ञानजनकस्य श्रीरुद्रस्योत्तमत्वं सिध्यति। यद्यप्युपनिषदन्तरेष्विव श्रीरुद्रोपनिषद्यपि प्रतिपाद्यब्रह्मतत्त्वसाक्षात्कारपर्यन्तं श्रवणमननिदिध्यासनानामावर्तनीयतया तत्प्रयुक्तोपनिषदावृत्तिरपेक्षितैव, तथापि द्वेधात्र ज्ञानोत्पत्तिः— एका श्रवणमननादिप्रणाड्या, एका तु श्रवणादिकं विनापि 'एतैर्ह वा अमृतो भवति' इति जाबालश्रुत्युक्तरीत्या केवलं जपमात्रेणैवाहमहमिकया मोचकैः परमेश्वरदिव्यनामभिः स्वयमुपनतादीश्वरप्रसादाज्ज्ञानोत्पत्तिः। तत्राद्यपक्षे श्रवणाद्यावृत्तिप्रयुक्ता श्रीरुद्रावृत्तिरस्ति; द्वितीयपक्षे तु कूर्मपुराणोक्तभस्मनिष्ठापरमेश्वरासक्तिपूर्वकात् प्रतिदिनं सकृद्रुद्रजपादेव शिवानुग्रहेण ज्ञानोत्पत्तिः। तमिमं पक्षमादाय श्रीरुद्रस्य सर्वोत्तमत्वसिद्धिरिति श्रुत्यभिप्रायः। 'अत्याश्रमी जपेत्' इति नेतराश्रमिपरिसंख्या क्रियते, जाबालोपनिषदि ब्रह्मचारिणः

प्रत्यपि श्रीरुद्रजपोपदेशेन 'गृहस्थैश्च वनस्थैश्च तथैव ब्रह्म-चारिभिः । शतरुद्रीयसंज्ञस्तु मन्त्रो जप्यो महत्तमः' इत्या-दितदनुसारिपुराणवचनसहस्रदर्शनेन च तद्विरोधात् । नापि संन्यासिनं प्रति रुद्रप्राप्त्यर्थम् 'अत्याश्रमी जपेत्' इति वि-धिभावः, 'सर्वोपनिषदां सारं रुद्राध्यायं च दत्तवान्' इति तस्या उपनिषत्त्वेन श्रीरुद्रस्य संन्यासिनं प्रति प्राप्तेः; 'सर्वेष्वामरणमावर्तयेदुपनिषदमावर्तयेत्' इति संन्यासि-नामुपनिषदामावृत्तिविधानाच्च । न च श्रीरुद्रस्योपनिषत्त्वे मानाभावः; 'सर्वोपनिषदां सारो रुद्राध्यायः समर्थितः । भोगार्थिनो मुमुक्षोर्वा प्रायश्चित्तार्थिनोऽपि वा ॥ रुद्रोपनि-षदं मुक्त्वा गतिरन्या न विद्यते' इत्यादिशिवपुराण-वचनैः, 'एकशतं यजुःशाखास्तासु रुद्रोपनिषदाम्नायते' इति भट्टभास्कराद्यभियुक्तव्यवहारेणोपनिषच्छब्दार्थपर्यालो-चनया च श्रीरुद्रस्योपनिषत्त्वावगतेः । द्वेधा ह्युपनिषच्छब्दः सांप्रदायिकैर्व्युत्पादितः— उप समीपे परब्रह्मणो निषीद-न्ति वर्तन्ते इत्युपनिषदो वेदान्ताः; ते हि साक्षाद्ब्रह्मणि तात्पर्येण वर्तन्ते, न तु कर्मकाण्डवत्तदाराधनयज्ञादिविधान-द्वारेति; अथवा उपनिपूर्वात् षद्लृधातोरवसादनकर्मणः क्विपि निष्पन्नोऽयमुपनिषच्छब्दः साक्षात्संसारमूलाविद्याव-

सादिनीं ब्रह्मविद्यामाचष्टे, तत्साधनतया तु वेदान्तेषु 'ला-ङ्गूलं जीवनम्' इत्यादिवद्वर्तत इति । सेयं द्विधा व्युत्पत्तिः श्रीरुद्रेऽतिस्वरसैव । तस्मादत्याश्रमिग्रहणमिह 'छत्रिणो ग-च्छन्ति' इत्यादाविवाजहल्लक्षणयात्याश्रमितादितरसाधारण्येन सर्वेषामप्याश्रमाणामुपलक्षणार्थम्; चतुर्ष्वाश्रमेषु यः कोऽपि प्रतिदिनं श्रीरुद्रस्य सर्वदा सकृद्वा जपेन ज्ञानमाप्नोतीति । एवं च 'यः शतरुद्रीयमधीते' इत्युपक्रम इव 'अत्याश्रमी जपेत्' इत्युपसंहारेऽप्यत्याश्रमिपदस्य श्रीरुद्रजपाधिकारिपुरु-षमात्रपरत्वादुपक्रमोपसंहारयोरेकवाक्यत्वं भवति । तथा 'यः पुमाञ्छतरुद्रीयं पठति श्रद्धया सह । दिने दिने महा-विष्णो मरणादूर्ध्वमैश्वरम् । ज्ञानं लब्ध्वा स विज्ञानादेव याति परां गतिम् । गृहस्थैश्च वनस्थैश्च तथैव ब्रह्मचारिभिः' इति सूतसंहितावचनान्यप्येकवाक्यतापरत्वेन समर्थितानि भवन्ति । यद्येवम्, 'यः शतरुद्रीयम्' इत्युपक्रमगतकर्तृसा-मान्येन 'सर्वदा सकृद्वा जपेत्' इत्युपसंहारगतजपक्रियापे-क्षितकर्त्राकाङ्क्षानिवृत्तेरत्याश्रमिपदं दत्त्वा तेन कर्तृसामान्यो-पलक्षणस्य किं प्रयोजनमिति चेत्, आकर्णय; कैवल्योपनि-षदुपक्रमे— 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृत-त्वमानशुः' इति मोक्षहेतुत्वमुपदिष्टम्; जाबालोपनिषदि च

श्रीरुद्रस्य मोक्षसाधनत्वोपदेशानन्तरम् 'अथ जनको ह वै याज्ञवल्क्यमुपसंगम्येत्युवाच भगवन् संन्यासमनुब्रूहि' इति प्रश्ने तं प्रति सपरिकरं संन्यासस्वरूपमुपदिश्य 'परिव्राड्विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षमाणो ब्रह्मभूयाय भवति' इति तस्य मोक्षसाधनत्वमुपदिष्टम् । तथा च संन्यासश्रीरुद्रयोस्तुल्यमेव ज्ञानसाधनत्वमिति प्राप्ते तद्वारणार्थमत्याश्रमिग्रहणम् । तेन च संन्यासिनामपि ज्ञानसिद्ध्यर्थं मुख्यतया रुद्रजपविधानात्तस्य ततोऽप्यतिशयः प्रदर्शितो भवति । ज्ञानोत्पत्तौ संन्यासस्य श्रीरुद्रसापेक्षत्वात् श्रीरुद्रस्य तु ब्रह्मचार्यादीन्प्रत्यपि मोक्षसाधनजप्यत्वेन संन्यासत्वानपेक्षत्वादिति । तदेतदत्याश्रमिपदेन सर्वाश्रमोपलक्षणकरणस्य प्रयोजनम् । न चैवं संन्यासिनः प्रणवं विना मन्त्रान्तरनिषेधविरोध इति वाच्यम्, 'उपनिषदमावर्तयेत्' इत्यारण्योपनिषद्वचनेन सामान्यतः संन्यासिनः प्रति उपनिषत्त्वेन श्रीरुद्रविधानेन, तत्रापि 'श्रीरुद्रं प्रणवं चैव नित्यमावर्तयेद्यतिः' इति विश्वेश्वरस्मृत्यादिवचनैः तान्प्रति विशिष्य रुद्रविधानेन, 'अत्याश्रमी सर्वदा सकृद्वा जपेत्' इति कैवल्योपनिषदि कृत्स्नज्ञानकाण्डापेक्षया मुख्यज्ञानसाधनतया श्रीरुद्रविधानेन च विविदिषुसंन्यासिनः श्रीरुद्रजपावश्यं-

भावेन तं प्रति मन्त्रान्तरनिषेधवचनस्य श्रीरुद्रव्यतिरिक्तमन्त्र-विषयत्वेनावश्यंवाच्यत्वात् । विद्वत्संन्यासिनस्तु कृतकृत्य-तया 'तस्य कार्यं न विद्यते' इति शास्त्रोक्त्या तं प्रति प्रणव-विधेः मन्त्रान्तरनिषेधस्य चासंभवात्सर्वाणि विधिनिषेधशा-स्त्राणि अविद्वाद्विषयाणीति । तस्मात्सिद्धम् 'अत्याश्रमी स-र्वदा सकृद्वा जपेत्' इति वचनेन श्रीरुद्रस्य ज्ञानकाण्डोत्तम-त्वमिति । न चेदं वचनं न श्रीरुद्रस्य सकृज्जपाज्ज्ञानजनक-त्वपरम्, किं तु कैवल्योपनिषद एव तथात्वपरम्; श्रीरुद्रस्य तु 'यः शतरुद्रीयमधीते' इत्यारभ्य 'तस्मादविमुक्तमाश्रितो भवति' इत्येतदन्तमेव प्रकरणमिति वाच्यम्; तथा सति कै-वल्योपनिषदि शतरुद्रीयाभिधानस्य संबन्धाभावेन तद्वाक्यस्य वैयर्थ्यप्रसङ्गात् । ज्ञानसाधनतया नात्र शतरुद्रीयाभिधानम्, कैवल्योपनिषदुपक्रम एव 'वेदान्तविज्ञानसुनिश्चितार्थाः सं-न्यासयोगाद्यतयः शुद्धसत्त्वाः' इति वेदान्तानां ज्ञानसाध-नत्वोक्त्या तद्विषयाकाङ्क्षाविरहेण श्रीरुद्रस्य तत्साधनत्वोक्ते-रनाकाङ्क्षिताभिधानत्वात्; किं तु ज्ञानापेक्षितचित्तशुद्ध्युपा-यतामात्रेण तदुक्तिरिति वाच्यम्, चित्तशुद्ध्युपायस्यापि वेदा-न्तसंन्यासयोगादेरुपक्रम एवोक्तत्वेन तदभिधानस्याप्यना-काङ्क्षितत्वात् । न च संन्यासाद्यपेक्षयापि मुख्यचित्तशुद्ध्यु-

पायः क इत्याकाङ्क्षायां श्रीरुद्राभिधानं युक्तमिति वाच्यम्; तथा सति संन्यासवेदान्ताद्यतिशायिचित्तशुद्ध्युपायत्वेनाविमुक्तोपासनाफलजनकत्वेन चोद्यमानस्य सर्वोत्तमत्वाप्त्या घट्टकुटीप्रभातन्यायापातेन श्रीरुद्रस्य सर्वोत्तमत्वाभाववादिना त्वया तथापि वक्तुमशक्यत्वात् । तस्मादित्थं वक्तव्यम्— ज्ञानसाधनत्वेन पूर्वोक्तानामपि वेदान्तशब्दवाच्योपनिषदां मध्ये किमुत्तममित्याकाङ्क्षायाम् 'यः शतरुद्रीयम्' इत्यादिवाक्यं तस्य सर्वोत्तमत्वं प्रतिपादयतीति । तथा च श्रीरुद्रस्य प्रतिपादनपरेऽस्मिन्वाक्यसंदर्भे यद्यत्याश्रमीति वचनं तस्य ज्ञानकाण्डोत्तमत्वं न प्रतिपादयेत्, तदा विवक्षितार्थप्रतिपादनं विना स्वयमप्यपर्यवस्यदिदं वाक्यमसंबद्धप्रलाप एव स्यादिति तेन तस्य ज्ञानकाण्डोत्तमत्वप्रतिपादनमवश्याभ्युपेयमिति युक्तमुत्पश्यामः । ननु तथापि श्रीरुद्रस्य न सर्वोपनिषदुत्तमत्वं सिध्यति, 'योऽथर्वशिरसं ब्राह्मणो नित्यमधीते तेन रुद्राणां शतसहस्राणि जप्तानि भवन्ति' इत्यथर्वशिरोवचनेन शतसहस्ररूपजपफलस्य सकृदथर्वशिरोजपमात्रादेव सिद्धिवर्णनेन श्रीरुद्रादप्यथर्वशिरस एवोत्तमत्वप्राप्तेः । न चेदमथर्वशिरः प्रशंसापरतयान्यथासिद्धमिति वाच्यम्; 'सर्वदा

सकृद्वा जपेत्' इत्यादेरपि श्रीरुद्रप्रशंसामात्रत्वस्य सुवचत्वादिति चेत्, उच्यते; अथर्वशिरस्येव खलु तद्वचनं श्रूयते, न तु तत्सजातीयोपनिषदन्तरे; तथा च प्रकरण्यथर्वशिरःप्रशंसापरत्वेन तस्य वचनस्यान्यथासिद्धिरुपपद्यते। श्रीरुद्रोत्कर्षवचनं तु न श्रीरुद्रोपनिषदि श्रुतम्, येन तद्वदन्यथासिद्धिः स्यात्। किं तु श्रीरुद्रोपनिषत्समानस्कन्धेषु जाबालकैवल्योपनिषदादिषु तत्र यदि तद्वचनं श्रीरुद्रप्रशंसार्थवादमात्रमेव स्यात् न स्वार्थपरम्, तदा रुद्रप्रशंसायाः कैवल्यजाबालादिविध्यसंबन्धात् तदनन्वितस्य स्वतःप्रामाण्यासंभवादर्थवादाधिकरणपूर्वपक्षन्यायेन तद्वचनमनर्थकमेव स्यात्; अतः स्वार्थपरमेव तदभ्युपेयम्। तथा च तीर्थे तीर्थान्तरस्तुतिन्यायेन प्रतिवादिकरार्पितजयपत्रिकान्यायेन च जाबालकैवल्यश्रुतिगतश्रीरुद्रोत्कर्षवचनं तस्य सर्वोत्तमत्वं प्रतिपादयन्न केनापि वारयितुं शक्यत इत्यलं बहुना॥

इत्थं श्रुतिसिद्धमेव श्रीरुद्रस्य सर्वोत्तमत्वं धर्मशास्त्रकारैरपि स्मर्यते। यथा च भगवता बोधायनेन श्रीरुद्रमहान्यासविधौ— 'शिवसंकल्पं हृदयं पुरुषसूक्तं शिरः उत्तरनारायणं शिखा अप्रतिरथं कवचम्' इत्यादिना शिवसंकल्पादीनां मन्वादिभिरखिलपापनिवर्तकतया महाफलत्वेन प्रद-

र्शितानामन्येषां च त्र्यम्बकपञ्चब्रह्ममन्त्रादीनामपि श्रीरुद्राङ्गतया प्रतिपादनात्तस्य सर्ववेदोत्तमत्वं दर्शितम् । एवमन्यदप्युदाहार्यम् । अतः सिद्धं श्रुतिस्मृतिपर्यालोचनयास्य सर्ववेदोत्तमत्वम् । 'वेदमेकगुणं जप्त्वा तदह्नैव विशुध्यति । रुद्रैकादशिनीं जप्त्वा सद्य एव विशुध्यति' इति यमस्मृतिः । एवम् 'रुद्रजापी जले स्थितः सहस्रशीर्षजापी च' इत्यादिना तत्तद्धर्मशास्त्रेषु पुरुषसूक्तादिप्रायपाठः पापहरत्वांशाभिप्रायेण, न तु समानप्रधानतया, अङ्गाङ्गिनोस्तारतम्ययोगादिति स्मृत्यभिप्रायः ॥

एवमितिहासोऽपि श्रीरुद्रस्य सर्ववेदोत्तमत्वं प्रतिपादयति । तथा हि महाभारते आनुशासनिके पर्वणि— 'दुर्वाससः प्रसादात्ते शंकरस्य महात्मनः । आसीत्किलेह विज्ञानं तन्मे व्याख्यातुमर्हसि ॥ महाभाग्यं यच्च तस्य नामानि च महात्मनः । सर्वं तच्छ्रोतुमिच्छामि शर्वस्य वदतां वर' इति युधिष्ठिरप्रश्ने, 'हन्त ते कथयिष्यामि नमस्कृत्वा कपर्दिनम्' इति तं प्रति श्रीकृष्णस्य वचनं प्रस्तुत्येदं श्रूयते— 'नामधेयानि लोकेषु बहून्यस्य यथार्थवत् निरुच्यते बहुत्वाच्च विभुत्वात्कर्मभिस्तथा ॥ वेदे चास्य विदुः प्राज्ञाः शतरुद्रीयमुत्तमम्' इति । द्रोणपर्वण्यप्यर्जुनं प्रति

एवमेव व्यासवचनं दृश्यते । अत्रोभयत्रापि ‘शतरुद्रीयमुत्त-
मम्’ इति शतरुद्रीयस्योत्तमत्वं किमपेक्षयेत्याकाङ्क्षायां वेदे
चेति पूर्ववाक्यश्रुतवेदपरित्यागेनाश्रुतप्रतियोगिकल्पनायोगा-
त्संनिहितवेदस्यैव प्रतियोगित्वेनान्वय इति श्रीरुद्रस्य वेदो-
त्तमत्वं कण्ठतः प्रतिपादितं भवति । तत्र हेतुरपि जपमात्रेण
सर्वपुरुषार्थप्रदत्वरूप इति तत्रैव भगवता प्रदर्शितम् ‘प्रयतः
प्रातरुत्थाय यदधीते विशां पते । प्राञ्जलिः शतरुद्रीयं नास्य
किंचन दुर्लभम्’ इति भगवता श्रीरुद्रं जपतः सर्वार्थ-
लाभः स्वस्यानुभवसिद्ध इति स्वाभिप्रायः प्रदर्शितो भवति ।
तेन च कूर्मलैङ्गहरिवंशाद्युक्तं भगवतो वासुदेवस्य तत्तदि-
ष्टावाप्तिफलकं श्रीरुद्रपञ्चाक्षरजपानुष्ठानं प्रत्यभिज्ञाप्यते ।
श्रूयते हि कूर्मपुराणे— ‘अत्र पूर्वं हृषीकेशो विश्वात्मा
देवकीसुतः । उवास वत्सरं कृष्णः सदा पाशुपतव्रतः ॥ भ-
स्मोद्धूलितसर्वाङ्गो रुद्राध्ययनतत्परः । आराधयन्हरिः शंभुं
कृत्वा पाशुपतव्रतम्’ इति । लैङ्गे ‘एवं स्तुत्वा महादेवं
दण्डवत्प्रणिपत्य च । जजाप रुद्रं भगवान्कोटिवारं जले
स्थितः’ इति । हरिवंशे च ‘भास्वत्त्रिपुण्ड्रो भसितैः सितः
सन्मौनी जटी वल्कलवान्मुकुन्दः । निरन्तरं चेतसि चन्द्र-
चूडं विचिन्तयन्पञ्च जजाप वर्णान्’ इति । एवं भारते

कैलासयात्रायां मानससरःस्थितपाशुपतास्त्रप्रसादनार्थं श्रीमत्कृष्णकृतश्रीरुद्रजपवचनान्यप्युदाहरणीयानि । एवं च यद्यप्यवाप्तसमस्तकामस्य परब्रह्मणो वासुदेवस्य न किंचिज्जप्यं वा ततः प्राप्यं वा विद्यते, तथापि 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते' इति गीतोक्तरीत्या लोकसंग्रहार्थं तदनुष्ठानमुपपद्यत एव । उक्तं हि महाभारते भगवतैव— 'मया प्रमाणं यद्तो लोकस्तदनुवर्तते । न ह्यादेयोऽस्ति कश्चिन्मे वरः पाण्डवनन्दन ॥ इति संचिन्त्य मनसा पुराहं विश्वमीश्वरम् । पुत्रार्थमाराधितवानहमात्मानमात्मना' । कूर्मपुराणे 'न वै पश्यन्ति तं देवं मोहिता मायया मम । ततोऽहं स्वात्मनो मूलं ज्ञापयन्पूजयामि तम्' इति । तथा च लोकशिक्षार्थमाचरितश्रीरुद्रजपो भगवान्वासुदेव एवास्माकं तन्माहिम्नि प्रमाणमिति सिद्धम् । एवमितिहासेनापि श्रीरुद्रस्य सर्वोत्तमत्वम् ॥

एवं पुराणेनापि तस्य सर्वोत्तमत्वमवगम्यते । तत्र ब्रह्मोत्तरखण्डकूर्मपुराणादिवचनानि कानि चित्पूर्वमेवोदाहृतानि । अन्यान्यपि परःशतानि दृश्यन्ते । तेषां सर्वेषामुदाहरणे बहुविस्तरः स्यादिति स्थालीपुलाकन्यायेन

किंचिदुदाह्रियते— सूतसंहितायाम् 'रुद्रजापी विमुच्येत महापातकपञ्जरात् । सम्यग्ज्ञानं च लभते तेन मुच्येत बन्धनात् ॥ अनेन सदृशं जप्यं नास्ति सत्यं श्रुतौ स्मृतौ' इति । तदेवं श्रुतिस्मृतीतिहासपुराणावगतमहामहिमशालिनि रुद्राध्याये यदर्वाचीनैर्मूर्खतान्त्रिकैः प्रलपितं तन्निराकुर्मः । ते खल्वेवमाहुः— अग्निपरमेव शतरुद्रीयम्, न परमेश्वरपरम्; अग्निचयने 'रुद्रो वा एष यदग्निः स एतर्हि जातो यर्हि सर्वश्चितः' इति चितिसंपूर्तिकालोत्पन्नमग्निं रुद्रमुक्त्वा 'स यथा वत्सो जातः स्तनं प्रेप्सत्येवं वा एष एतर्हि भागधेयं प्रेप्सति तस्मै यदाहुतीर्न जुहुयादध्वर्युं च यजमानं च ध्यायेच्छतरुद्रीयं जुहोति' इति तस्मिन्नग्नौ शतरुद्रीयहोमविधानेन तस्याग्निपरत्वावगमात् । 'गौणं लाक्षणिकं वापि वाक्यभेदेन वा पुनः । वेदोऽयमाश्रयत्यर्थं को न्वत्र प्रतिकूलयेत्' इति भट्टवार्त्तिकोक्तरीत्या साक्षाद्वेदेन कृतं व्याख्यानमनादृत्य श्रुतिलिङ्गादिन्यायैरन्यपरत्वस्य वक्तुमशक्यत्वात् । न हि 'सप्तदश प्राजापत्यान्पशूनालभते' इति साप्तदश्योक्तिबाधितं बहुवचनस्य त्रित्वे पर्यवसानं कपिञ्जलाधिकरणन्यायेन कल्पयितुं शक्यम् । अस्तु वा परमेश्वरपरम्; तथापि न ततः सर्वेश्वरत्वादेस्तात्त्विकत्वसिद्धिः ।

नमस्कारैरिष्टानिष्टप्राप्तिपरिहारप्रार्थनालिङ्गैश्च श्रीरुद्रस्य स्तुतिपरत्वावसायादिति। अत्र ब्रूमः—यथा हि 'रुद्रो वा एष यदग्निः' इत्यग्निपरत्वव्याख्यानश्रुतिः, एवम् 'एतानि ह वा अमृतस्य नामधेयानि' इति परमेश्वरपरत्वव्याख्यानश्रुतिरुपलभ्यते; सा च 'वेदे चास्य समाम्नातं शतरुद्रीयमुत्तमम्। इमानि मे रहस्यानि' इति पूर्वोदाहृतैरितिहासपुराणैरुपबृंहितत्वात् नार्थान्तरपरत्वशङ्कास्पदम्। 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति वचनेन श्रुतिस्मृतीतिहासपुराणानां वनसिंहन्यायेन परस्परानुग्राह्यानुग्राहकभावापन्नतया प्रबलत्वेन तदवगतार्थस्याप्रकम्प्यत्वात्। एवं चाग्निपरत्व इव ब्रह्मपरत्वेऽपि साक्षाद्वेदेन कृतं व्याख्यानमविशिष्टमिति कथमत्र निर्णय इति संशये न्यायतो व्यवस्था कर्तव्या। तदुक्तं भट्टवार्त्तिके— 'धर्मे प्रमीयमाणे हि वेदेन करणात्मना। इतिकर्तव्यताभागं मीमांसा पूरयिष्यति' इति। ततश्च श्रुतिलिङ्गादिन्यायैः श्रीरुद्रस्य ब्रह्मपरत्वमेवावधार्यते। यथा खलु 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति। ईशानो भूतभव्यस्य' इति कठवल्लीश्रुतिरीशानश्रुतिबलात्परमेश्वरपरैव न तु जीवपरेति 'शब्दादेव प्रमितः' इत्यधिकरणे व्यवस्थापितम्, तथात्रापि शिव-

शंकरभवशर्वपशुपतिरुद्राद्यभिधानश्रुतिशतबलाद्ब्रह्मपरैव श्री-रुद्रोपनिषदिति व्यवस्था आश्रीयते । यथा च 'आकाशस्त-ल्लिङ्गात्' 'अन्तस्तद्धर्मोपदेशात्' 'अन्तर्याम्यधिदैवादिषु त-द्धर्मव्यपदेशात्' 'अदृश्यत्वादिगुणको धर्मोक्तेः' इत्याद्य-धिकरणेषु 'अस्य लोकस्य का गतिरिति आकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव स-मुत्पद्यन्ते' 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' इत्यादिश्रुतीनां सर्वभूतकारणत्वसर्वात्मकत्वलिङ्गबलाद्ब्रह्मपर-त्वं व्यवस्थापितम्, तथात्रापि सर्वेश्वरत्वसर्वात्मकत्व-सर्वान्तर्यामित्वादिलिङ्गबलाद्ब्रह्मपरत्वमाश्रयितव्यम् । दृश्य-ते हि श्रीरुद्रोपनिषदि— 'दिशां च पतये नमः' इत्या-दिना प्रपञ्चान्तर्गतैकैकवस्त्वाधिपत्यप्रदर्शनपूर्वकमुपपाद्यमा-नम् 'जगतां पतये नमः' इति सर्वजगदीश्वरत्वम्, 'इषुम-द्भ्यो धन्वाविभ्यश्च' इत्यादावेकैकात्मकत्वप्रदर्शनपूर्वकमुप-पाद्यमानं सर्वात्मकत्वम्, 'नमः स्रुत्याय च' इत्यादिना तथै-वोपपाद्यमानं सर्वान्तर्यामित्वं च ब्रह्मासाधारणधर्मः । एवं नी-लग्रीवत्वकपर्दित्वपिनाकपाणित्वादिविशिष्टं पारमेश्वरासाधा-रणं निरूपितम्; अन्यानि च तथाभूतानि लिङ्गानि वाक्यानि च द्रष्टव्यानि । न ह्येतत्सर्वेश्वरत्वादिकमग्नेः संभवति । श्रूयते

हि तलवकारिणामुपनिषदि— पुरा देवासुरयुद्धे स्वस्वमहि
म्नैव जयो जात इति गर्विष्ठानां देवानां दर्पमपनेतुं तेष
पुरतो यक्षरूपेण शिवः प्रादुर्भूय निजस्वरूपजिज्ञासय
समीपमागतस्य सकलजगद्दहनसामर्थ्यमदावलिप्तस्याग्नेः पुर-
तस्तृणमेकं निधाय तावन्मात्रमपि दग्धुं तस्यासामर्थ्यम्,
तथैव वायोः तच्चालयितुमप्यशक्तिमापाद्य स्वयं तिरोदधे,
ततः कोऽसौ यक्षरूपी दिव्यः पुरुष इति जिज्ञासया
खिद्यतां देवानां पुरस्तात्तत्स्वरूपोपदिदिक्षया परब्रह्मविद्या-
धिदेवता भगवती हैमवती उमा स्वयमाविर्भूय परमेश्वर-
एव यक्षरूपेणाविरासीदित्युपदिदेश । देवाश्च पारमेश्वरमेव
तं जयमहिमानमन्वजानान्नित्युपाख्यानं पुराणेषु च प्रपञ्चितम् ।
एवम् 'जनिताग्नेर्जनिता सूर्यस्य' 'भीषास्मादग्निश्चेन्द्रश्च'
'यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वाभु-
वनाविवेश' इत्युपाख्यानमप्यनुसंधेयम् । तथा च परमे-
श्वरसृष्टस्य तन्नियम्यस्य तदायत्तशक्तिकस्याग्नेः सर्वान्तर्यामि-
त्वसर्वात्मकत्वाद्यसंभवात् साग्नीन्द्रादिसकलजगत्स्रष्टुः तन्नि-
यन्तुः परमेश्वरस्यैव तदसाधारणं लिङ्गम् । तदेवं श्रुतिलिङ्गा-
दिन्यायैः तदुपोद्बलितैरितिहासपुराणबोधायनधर्मशास्त्राद्युप-
बृंहणैः तदुभयोपबृंहितत्वेनाप्रकम्प्यस्वार्थतया, तथादित्यादी-

नामयनेषु संवत्सरसत्रेष्वहर्गणत्वसामान्याद्द्वादशाहिकविध्य-
न्तप्राप्तौ संवत्सरसत्रत्वेनान्तरङ्गसादृश्यात् गवामयनविध्यन्त
एव ग्राह्य इतिवदुपनिषदर्थनिर्णये उपनिषत्कृतमेव व्याख्यानं
ग्राह्यमन्तरङ्गसादृश्यात्, न तु कर्मकाण्डकृतं व्याख्यानमिति
प्रत्यासत्त्यतिशयेनावश्यग्राह्यतया, तथा 'यत्किंचित्प्राचीनम-
ग्नीषोमीयात्तेनोपांशु प्रचरन्ति' इति सावकाशादुपांशुस्वरवि-
धानात् 'मन्द्रं प्रायणीयायामनुब्रूयान्मन्द्रतरमातिथ्यायाम्'
इति प्रायणीयादिगतस्वरान्तरविधानस्येवार्थवादत्वेन स्तुत्या-
दिपरतया सावकाशात्तद्राहित्येन निरवकाशतया च प्रबलेन
'एतानि ह वा अमृतस्य नामधेयानि' इति जाबालोपनिष-
द्व्याख्यानेन पारमेश्वरमेवेदं शतरुद्रीयमिति व्यवस्थी-
यते । यदग्निचयनहोमविध्यर्थवादकोणे स्थितम् 'रुद्रो
वा एष यदग्निः' इति व्याख्यानम्, तत्तु मन्त्राधि-
करणसिद्धदृष्टार्थकत्वनिर्वाहाय शतरुद्रीयमन्त्रस्य तत्प्रतिपा-
द्यरुद्रात्मना अग्नेः स्तुत्यभिप्रायेणाग्नौ विनियोग इति ताव-
न्मात्ररूपं तद्विवरणमिति न ततः शतरुद्रीयस्य श्रुतिलिङ्गा-
द्यननुगुणाग्निपरत्वसिद्धिः । स्वारसिकप्रतीतिरहितेऽर्थे विनि-
युज्यमानस्य मन्त्रस्य यथाकथंचिल्लक्षणागौण्यध्याहारादि-
भिस्तदर्थप्रकाशकत्वेऽपि तत्परत्वाभावात् । एतदभिप्रायक-

मेव 'गौणं लाक्षणिकं वा' इति वार्त्तिकवचनम् । अत एव 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति गार्हपत्योपस्थाने विनियोगेऽप्यैन्द्र्या ऋचो न गार्हपत्यपरत्वमिष्यते । अत एव च पुरुषसूक्तस्य 'पुरुषाद्दक्षिणतः पुरुषेण नारायणेन ब्रह्माभिष्टौति सहस्रशीर्षा पुरुषः' इति शतपथब्राह्मणेन 'उपाकृतवान् दक्षिणतोऽवस्थाय ब्रह्मा सहस्रशीर्षा पुरुष इति पुरुषेण नारायणेन पराचानुशंसति' इत्यापस्तम्बसूत्रेण च पुरुषमेधे पशुत्वेन विनियुक्तानां स्तवने, तथा 'पुरस्तात्प्रतीचीनं पुरुषाकृतिं चिनोति पुरुषशिराः स्याः शिरो भवति' इति महाग्नौ पुरुषाकृत्युपस्थानं विधाय 'सहस्रशीर्षा पुरुष इत्युपसंनिहितां पुरुषेण नारायणेन यजमान उपतिष्ठति' इत्यापस्तम्बसूत्रेण पुरुषाकृत्युपस्थाने वा, 'यजेत्पुरुषसूक्तेन वरुणं विश्वरूपिणम् । यजेत्पुरुषसूक्तेन धनदं विश्वरूपिणम्' इति शातातपस्मृत्यादिषु वरुणधनदादियजने विनियुक्तत्वेऽपि न तत्परत्वमिति भूयानस्य विषयः । तस्माद्बहून्पश्यन्त्या बहुभिर्भाषमाणाया अपि पतिव्रताया हृदयं पत्याविव बहुभिर्वचनैरितस्ततो नीयमानाया अपि भगवत्या श्रीरुद्रोपनिषदो हृदयं श्रीमति साम्बपरब्रह्मण्येव व्यवतिष्ठत इति तामन्यपरां चिकीर्षमाणा

रामानुजादयः भगवतीं सीतामात्मसात्कर्तुं प्रवृत्तरावणवत् महापापिष्ठा इत्यास्तां तावत् ॥

यत्तूक्तं नमस्कारैरिष्टानिष्टप्राप्तिपरिहारप्रार्थनालिङ्गैः श्रीरुद्रस्य स्तुतिपरत्वान्न सर्वेश्वरत्वसर्वान्तर्यामित्वादिकं तात्त्विकं सिध्यतीति, तत्तुच्छम्; नमस्कारो हि नमस्कार्योत्कर्षप्रयुक्तः, लोके तथैव दर्शनात्, आराधयितुराराधनीयोत्कर्षानुसंधानपूर्वकः प्रह्वभावो नमस्कार इति शास्त्रकारैः नमस्कारशब्दार्थनिर्वचनाच्च । नमस्कार्योत्कर्षगवेषणायां च श्रुतविशेषणसमर्पितमुत्कर्षमपहायोत्कर्षान्तरपरिग्रहायोगात् नमस्कारमन्त्रगततत्तद्विशेषणसमर्पितः सर्वेश्वरत्वसर्वान्तर्यामित्वादिरूपस्तात्त्विक एव सिध्यति । कुतस्तस्मिन्नतात्त्विकत्वशङ्का? यद्यपि उत्कर्षादिव भयादपि लोके नमस्कारो दृश्यते, श्रुतावपि दृश्यते— 'नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे अन्यन्ते अस्मत्तपन्तु हेतयः पावकोऽस्मभ्यं शिवो भव' इति च, तथा च परमेश्वरस्य भीमत्वेन भयप्रयुक्तोऽयं नमस्कार इत्यन्यथासिद्धिः शङ्कितुं शक्या, तथापि भयप्रयुक्तोऽपि नमस्कारः श्रुतावस्योत्कर्षं विना न संभवति । अत एव 'नमस्ते हरसे शोचिष इत्याह नमस्कृत्य हि वसीयांसमुपचरन्ति' इति तन्मन्त्रब्राह्मणे तन्न-

मस्कारस्यौत्सर्गिकस्वविषयोत्कर्षापरित्यागो वर्णितः । वस्तुतो भयप्रयुक्तत्वेऽपि तन्नमस्कारस्य न क्षतिः, श्रीरुद्रस्यानितर-साधारणनमस्कारभूयस्त्वस्य भयभूयस्त्वप्रयुक्ततयोत्कर्षज्ञाप-कत्वस्यापरिहार्यत्वात् । भयभूयस्त्वं हि परब्रह्मलिङ्गम्, 'भीषास्माद्वातः पवते' 'महद्भयं वज्रमुद्यतम्' इत्यादिश्रुतेः । अतो नमस्कारो न स्तुतिलिङ्गम् । इष्टानिष्टपरिहारप्रार्थना तु यद्यपि स्तुतिलिङ्गं भवति, तथापि परमेश्वरादन्यत्रैव सा तथा, न तु परमेश्वरे । तथा सति पुरुषसूक्तैकवाक्यतापन्ने 'अद्भ्यः संभूतः' इत्युत्तरनारायणानुवाके 'इष्टं मनिषाण अमुं मनिषाण सर्वं मनिषाण' इति प्रार्थनादर्शनेन पुरुषसू-क्तस्यापि स्तुतिमात्रपरत्वात्तदुपनीतममृतेशानत्वविराट्स्रष्टृ-त्वादिकमप्यतात्पर्यमिति चोद्ये तव किमुत्तरम्? अतो यत्किं-चिदेतदित्यास्तामतिविस्तरः ॥

इत्थं श्रीरुद्रस्य श्रुतिस्मृतीतिहासपुराणप्रसिद्धं सर्ववेदोत्त-मत्वं तत्तात्पर्यं च प्रपञ्चेन विवेचितम्; इदानीं बोधायनो-क्तश्रीरुद्रमहान्यासो जपादिकृतामुपकाराय संप्रदायेनार्थतो विविच्यते— 'अथातः पञ्चाङ्गरुद्राणां महान्यासपूर्वकं जपहोमार्चनाभिषेकविधिं व्याख्यास्यामः' इति । अत्र प-ञ्चाङ्गरुद्रस्यायमर्थः— पञ्च प्रकारा अङ्गन्यासा येषाम्, ते

पञ्चाङ्गरुद्राः; तथा हि— शिखाद्यस्त्रान्तमेकत्रिंशदङ्गन्यासः प्रथमः, मूर्धादिपादान्तं दशाङ्गन्यासः द्वितीयः, पादादिमूर्धान्तं पञ्चाङ्गन्यासः तृतीयः, गुह्यादिमस्तकान्तं पञ्चाङ्गन्यासश्चतुर्थः, हृदयाद्यस्त्रान्तं पञ्चाङ्गन्यासः पञ्चमः। तत्राद्यन्यासं दर्शयति— 'या ते रुद्र इति शिखायाम्, अस्मिन्महत्यर्णव इति शिरसि, सहस्राणीति ललाटे, हंसः शुचिषदिति भ्रुवोर्मध्ये, त्रियम्बकं यजामह इति नेत्रयोः, नमः स्रुत्याय चेति कर्णयोः, मानस्तोक इति नासिकायाम्, अवतत्येति मुखे, नीलग्रीवौ द्वौ कण्ठे, नमस्ते अस्त्वायुधायेति बाह्वोः, या ते हेतिरित्युपबाह्वोः, ये तीर्थानीति हस्तयोः, सद्योजातमिति पञ्चानुवाकान्पञ्चस्वङ्गुलीषु, नमो वः किरिकेभ्य इति हृदये, नमो गणेभ्य इति पृष्ठे, नमो हिरण्यबाहव इति पार्श्वयोः, विज्यं धनुरिति जठरे, हिरण्यगर्भ इति नाभौ, मीढुष्टमेति कट्याम्, ये भूतानामिति गुह्ये, ये अन्नेष्वित्यण्डयोः, सशिरा जातवेदा इत्यपाने, मा नो महान्तमित्यूर्वोः, एष ते रुद्र इति जान्वोः, संसृष्टजिदिति जङ्घयोः, विश्वं भूतमिति गुल्फयोः, ये पथामिति पादयोः, अध्यवोचदिति कवचम्, नमो बिल्मिन इत्युपकवचम्, नमो अस्तु नीलग्रीवायेति तृतीयनेत्रम्, प्रमुञ्च धन्वन इत्यस्त्रम्, य एतावन्तश्चेति दिग्बन्धः' इति। अ-

स्यार्थः—'या ते रुद्र शिवा तनूः' इति मन्त्रानुक्त्वा शिखायै नम इत्युच्चार्य शिखादीन्स्पृशेत्। नीलग्रीवौ द्वौ कण्ठ इत्यत्र कण्ठस्योत्तरदक्षिणभागयोः क्रमेण नीलग्रीवमन्त्रद्वयन्यासः। या ते हेतिरित्युपबाह्वोरित्यत्रोपबाहुशब्देन मणिबन्धादुपरिभागावुच्येते। सद्योजातमिति पञ्चानुवाकान् पञ्चस्वङ्गुलीष्वित्यत्र सद्योजातमन्त्रमुक्त्वाङ्गुष्ठाभ्यां नम इत्युच्चार्याङ्गुष्ठयोर्न्यसेत्। एवं तर्जन्योर्वामदेवं मध्यमयोरघोरम् अनामिकयोस्तत्पुरुषं कनिष्ठिकयोरीशानं च न्यसेदित्यर्थः। सशिरा जातवेदा इति 'सशिरा जातवेदा अक्षरं पदं वेदानां सारमुद्धृतं जातवेदसे शिरसे स्वाहा' इत्ययं मन्त्रः सशिरा जातवेदा इत्यनेनोच्यत इत्येकः संप्रदायः; 'जातवेदसे' 'सोममरातीयतः' 'अग्ने त्वं पारय' 'अग्ने नय सुपथा राये' 'विश्वानि नो दुर्गहा' 'पृतनाजितं सह' इत्येते षण्मन्त्राः 'सशिरा जातवेदाः' इत्यनेन गृह्यन्ते इत्यपरः संप्रदायः; आचारतो व्यवस्था। अध्यवोचदिति मन्त्रेण कवचाय हुमिति न्यसेत्। नमो बिल्मिने चेत्यनेनोपकवचाय हुमिति न्यसेत्। नमो अस्तु नीलग्रीवायेत्यनेन तृतीयनेत्राय नम इति न्यसेत्। प्रमुञ्च धन्वन इत्यनेनास्त्राय फडिति न्यसेत्। सोऽयं शिखाद्यस्त्रान्तो दिग्बन्धसहितः प्रथमो न्यासः।

अथ द्वितीयन्यासमाह— 'ओं नमो भगवते रुद्राय' इति नमस्कारं न्यसेत् । 'ओंकारं मूर्ध्नि विन्यस्य नकारं नासिकाग्रतः । मोकारं तु ललाटे स्याद्भकारं मुखमध्यतः ॥ गकारं कण्ठदेशे च वकारं हृदि विन्यसेत् । तेकारं दक्षिणे हस्ते रुकारं वामतो न्यसेत् ॥ द्राकारं नाभिदेशे तु यकारं पादयोर्न्यसेत्' इति । अस्यार्थः— पूर्वोक्तदिग्बन्धनसहितप्रथमन्यासानन्तरम्, 'ओं नमो भगवते रुद्राय' इति मन्त्रमुच्चार्य नमस्कृत्य 'ओं मूर्ध्ने नमः' इति मूर्ध्नि, 'नं नासिकायै नमः' इति नासिकायाम्, 'मों ललाटाय नमः' इति ललाटे, 'भं मुखाय नमः' इति मुखे, 'गं कण्ठाय नमः' इति कण्ठे, 'वं हृदयाय नमः' इति हृदये, 'तें दक्षिणहस्ताय नमः' इति दक्षिणहस्ते, 'रुं वामहस्ताय नमः' इति वामहस्ते, 'द्रां नाभ्यै नमः' इति नाभौ, 'यं पादाभ्यां नमः' इति पादयोः न्यसेदिति; सोऽयं द्वितीयन्यासः । अथ तृतीयन्यासमाह— 'सद्यं च पादयोर्न्यस्य वामं न्यस्योरुमध्यतः । अघोरं हृदि विन्यस्य मुखे तत्पुरुषं न्यसेत् ॥ ईशानं मूर्ध्नि विन्यस्य हंसो नाम सदाशिवः । एवं न्यासविधिं कृत्वा ततः संपुटमारभेत् ॥ 'त्रातारमिन्द्रम्' 'त्वं नो अग्ने' 'सुगं नः पन्थाम्' 'असुन्वन्तम्' 'तत्त्वा-

यामि ' ' आनोनियुद्भिः ' ' वयं सोम ' ' तमीशानम् ' ' अस्मे रुद्रा ' स्योना पृथिवी ' इत्येतत्संपुटमिन्द्रादिदिक्षु विन्यस्य एवमेवात्मनि रौद्रीकरणं कृत्वा त्वगस्थिगतैः सर्वपापैः प्रमुच्यते सर्वभूतेष्वपराजितो भवति । ततो भूतप्रेतपिशाचब्रह्मराक्षसयक्षयमदूतशाकिनीडाकिनीसर्पश्वापदतस्कराद्युपद्रवाद्युपघाताः सर्वे ग्रहा ज्वलन्तं पश्यन्तु ' इति । अस्यार्थः— सद्योजातमन्त्रमुच्चार्य पद्भ्यां नम इत्युच्चार्य पादौ स्पृशेत् । एवं वामदेवादिभिरूर्वादिमूर्धान्तं न्यसेत् । अनन्तरं हंसहंसेत्युक्त्वा मूर्धानं स्पृशेत् । हंसो नाम सदाशिव एव ; तथा चैवं कुर्वन् हंसो नाम हंस इति प्रसिद्धः सदाशिव एव भवतीति । एतदनन्तरकृत्यमाह—' ततः संपुटमारभेत् ' इति । संपुटशब्दवाच्यामञ्जलिमुद्रां विधाय तां प्रथमं प्राङ्मुखीं कृत्वा ' त्रातारमिन्द्रम् ' इति मन्त्रमुच्चार्य इन्द्राय नम इति ब्रूयात् । तत आग्नेयाभिमुखीं कृत्वा ' त्वं नो अग्ने ' इति मन्त्रमुच्चार्य अग्नये नम इति ब्रूयात् । एवं याम्यादीशानान्तं कुर्यात् । तदनन्तरं रौद्रीकरणं कुर्वीत । तच्च द्विविधम्— ' विभूरसि प्रवाहणः ' इत्यादि ' अहिरसि बुद्ध्नियः ' इत्यन्तेषु सर्वेष्वपि मन्त्रेषु ' रौद्रेणानीकेन पाहि माग्ने पिपृहि मा मा मा हिंसीः ' इत्यनुषङ्गेणानुष्ठीयमानं रौद्रीकरणमेकम् । अन्यत्तु ' प्रजनने ब्रह्मा तिष्ठत्वित्यारभ्य

सर्वतोऽग्निज्वालामालापरिवृतास्तिष्ठन्तु मां रक्षन्तु' इत्येतेन वक्ष्यमाणरीत्या स्वशरीरे देवतास्थापनरूपं रौद्रीकरणम् । यथा संप्रदायमाचरणीयम् । तदेतस्य सर्वस्य फलमाह— 'त्वगस्थिगतैः सर्वपापैः प्रमुच्यते' इत्यादिना । सोऽयं तृतीयो न्यासः । अथ चतुर्थन्यासमाह— 'मनोज्योतिरबोध्यग्निरग्निं मूर्धा मूर्धानं मर्माणि ते जातवेदा इति गुह्यनाभिहृदयकण्ठमुखशिरांस्यभिमन्त्र्यात्मरक्षा कर्तव्या' इति । अस्यार्थः— मनोज्योतिरिति मन्त्रमुच्चार्य गुह्याय नम इत्युक्त्वा गुह्यं स्पृशेत् । एवमबोध्यग्निरित्यादिभिः नाभ्यै नम इत्युक्त्वा नाभिहृदयकण्ठमुखशिरांसि स्पृशेत् । इदमेव गुह्याद्यभिमन्त्रणमात्मरक्षेति व्यपदिश्यते । सोऽयं चतुर्थो न्यासः । अथ पञ्चमन्यासमाह—'शिवसंकल्पं हृदयं पुरुषसूक्तं शिर उत्तरनारायणं शिखा अप्रतिरथं कवचं प्रतिपुरुषमिति नेत्रं शतरुद्रीयमित्यस्त्रं भूर्भुवःसुवरोमिति दिग्बन्धः' इति । अस्यार्थः— 'येनेदं भूतं भुवनं भविष्यत्' इत्यादिषट्त्रिंशन्मन्त्रात्मकं शिवसंकल्पसूक्तं पठित्वा हृदयाय नम इति हृदये न्यसेत् । पुरुषसूक्तं पठित्वा शिरसे स्वाहेति शिरसि विन्यसेत् । 'प्रतिपूरुषमेककपालं निर्वपति' इत्यनुवाकः 'जात एव प्रजा रुद्रान्निरवदयते' इति तद्ब्राह्मणा-

नुवाकश्च प्रतिपूरुषं तत्पठित्वा 'नेत्रत्रयाय वौषट्' इति नेत्र-त्रयं स्पृशेत् । 'त्वमग्ने रुद्र' इत्यनुवाकः, तथा 'देवा देवेषु श्रयध्वम्' इत्यनुवाकश्च शतरुद्रीयम् । यद्यपि 'त्वमग्ने रुद्र' इत्यत्र न प्रागुक्तशतरुद्रीयपदप्रवृत्तिनिमित्तम्, तथापि विश्वदेवदेवत्यस्य 'विश्वेदेवस्य नेतुः' इति मन्त्रस्य 'द्युम्नं वृणीत पुष्यस इत्याह पौष्ण्येतेन' इति पौष्णत्ववत् 'उद्बुध्यस्वाग्ने' इति मन्त्रस्य बुधप्रातिपदिकयोगमात्रात् बुधदैवत्यत्ववत् 'शं नो देवीः' इत्यादेः शनिप्रातिपदिकावयवाच्छनिदेवत्यत्ववच्च अग्निदेवत्यस्यापि 'त्वमग्ने रुद्र' इत्यस्य रुद्रपदयोगमात्राच्छ-तरुद्रीयत्वं मन्यते । वस्तुतस्तु 'त्वमग्ने रुद्र' इत्यनुवाकप्रति-पाद्यस्याग्नेः शतरुद्रात्मना स्तुतिरिति तस्य शतरुद्रीयत्वव्य-पदेशः । 'देवा देवेषु' इत्यनुवाकस्य 'देवास्त्रिरेकादशास्त्रिस्त्र-यस्त्रिंशाः' इति शतरुद्रप्रतिपादनेन तत्र किंचिदवयवार्थानु-गमाच्छतरुद्रीयत्वं द्रष्टव्यम् । तावेतावनुवाकौ पठित्वा अ-स्त्राय फडिति न्यसेत् । सोऽयं पञ्चमो न्यासः । अथ पञ्चाङ्गन्यासानन्तरकृत्यमाह—'पञ्चाङ्गं सकृज्जपेदष्टाङ्गं प्रण-म्य' इति सद्योजातादिरूपपञ्चाङ्गं सकृज्जपेत्; अथाष्टाङ्गकं प्रणामं कुर्यात् । तानेवाष्टमन्त्रानाह— 'हिरण्यगर्भः' 'यः प्राणतः' 'ब्रह्मजज्ञानम्' 'मही द्यौः' 'उपश्वासय' 'अग्ने

नय’ ‘या ते अग्ने’ ‘इमं यमप्रस्तरम्’ इत्यष्टाङ्गं प्रणम्य इति । एतेषां मन्त्राणां पाठमात्रेण निर्वृत्तः प्रणाम इत्येकः पक्षः; एभिर्मन्त्रैः साष्टाङ्गं दण्डवत्प्रणाम इत्यपरः पक्षः । तदनन्तरं कृत्यमाह— ‘अथात्मानं श्रीरुद्ररूपं ध्यायेत्— ‘शुद्धस्फटिकसंकाशं त्रिणेत्रं पञ्चवक्त्रकम् । गङ्गाधरं दशभुजं सर्वाभरणभूषितम् ॥ नीलग्रीवं शशाङ्काभं नागयज्ञोपवीतिनम् । व्याघ्रचर्मोत्तरीयं च वरेण्यमभयप्रदम् ॥ कमण्डल्वक्षसूत्राद्यैरन्वितं शूलपाणिनम् । ज्वलन्तं पिङ्गलजटं शिखामुद्योतकारिणम् । अमृतेनाप्लुतं हृष्टमुमादेहार्धधारिणम् । दिव्यसिंहासनासीनं दिव्यभोगसमन्वितम् । दिग्देवतासमायुक्तं सुरासुरनमस्कृतम् ॥ नित्यं च शाश्वतं शुद्धं ध्रुवमक्षरमव्ययम् । सर्वव्यापिनमीशानं रुद्रं वै विश्वरूपिणम् ॥ एवं ध्यात्वा व्रतं सम्यक्ततो यजनमारभेत्’ इति । अभिषेकविधिव्याख्यामाह— ‘अथातो रुद्रस्नानार्चनाभिषेकविधिं व्याख्यास्यामः । आदित एव तीर्थे स्नात्वोदेत्याहतं वासः परिधाय शुचिः प्रयतो ब्रह्मचारी शुक्लवासाः ईशानस्य प्रतिकृतिं कृत्वा तस्य दक्षिणतः प्रत्यग्देशे तन्मुखः स्थित्वा आत्मनि देवताः स्थापयेत्— प्रजनने ब्रह्मा तिष्ठतु । पादयोर्विष्णुस्तिष्ठतु । हृदये शिवस्तिष्ठतु । उदरे पृथिवी तिष्ठतु ।

जठरे अग्निस्तिष्ठतु । कण्ठे वसवस्तिष्ठन्तु । वक्त्रे सरस्वती तिष्ठतु । नासिकयोर्वायुस्तिष्ठतु । नयनयोश्चन्द्रादित्यौ तिष्ठेताम् । कर्णयोरश्विनौ तिष्ठेताम् । ललाटे रुद्रास्तिष्ठन्तु । पृष्ठे पिनाकी तिष्ठतु । पुरतः शूली तिष्ठतु । पार्श्वयोः शिवाशंकरौ तिष्ठेताम् । सर्वतो वायुस्तिष्ठतु । ततो बहिः सर्वतोऽग्निर्ज्वालामालापरिवृतस्तिष्ठतु । सर्वेष्वङ्गेषु सर्वा देवतास्तिष्ठन्तु । मां रक्षन्तु । 'अग्निर्मे वाचि श्रितः' इति यथालिङ्गमङ्गानि संस्पृश्यात्मानं गन्धपुष्पधूपदीपनैवेद्यैर्मानसैराराधयेत् । अथैनं प्रसादयेत्— 'आराधितो मनुष्यैस्त्वं सिद्धैर्देवासुरादिभिः । आराधयामि भक्त्या त्वां मां गृहाण महेश्वर' इति; त्रियम्बकमिति च । एवमात्मपूजानन्तरं बाह्यपूजाप्रकारमाह– 'आत्वा वहन्तु हरयः सचेतसः श्वेतैरश्वैः सह केतुमद्भिः । वाताजितैर्बलवद्भिर्मनोजवैरायाहि शीघ्रं मम हव्याय शर्वोम्' इत्यावाहयति । स्थापिते तु नावाहनम् । अथासनं ददाति 'सद्योजातम्' इति । 'भवे भव' इति पाद्यम् । 'भवोद्भवाय नमः' इत्यर्घ्यम् । 'वामदेवाय नमः' इत्याचमनीयम् । अथैनं स्नापयति आपो हि ष्ठादिभिस्तिसृभिः, हिरण्यवर्णा इति चतसृभिः, पवमानः सुवर्जन इत्यनुवाकेन मार्जयित्वा, 'सर्वो वै रुद्रः' 'कया नश्चित्रः' 'आपो वा इदं सर्वम्' इत्येतैश्च ।

'वामदेवाय नमः' इति वस्त्रम्, 'ज्येष्ठाय नमः' इत्युपवीतम्, 'रुद्राय नमः' इत्याचमनीयम्, प्रणवेन भूषणम्, 'कालाय नमः' इति गन्धम्, 'कलविकरणाय नमः' इत्यक्षतम्, 'बलविकरणाय नमः' इति पुष्पम्, 'बलप्रमथनाय नमः' इति धूपम्, 'सर्वभूतदमनाय नमः' इति दीपम्, 'मनोन्मनाय नमः' इति नैवेद्यं ददाति। अथास्मै अष्टभिर्मन्त्रैरष्टौ पुष्पाणि ददाति 'भवाय देवाय नमः' इति। अथास्य रुद्रतनूरुपतिष्ठते 'अघोरेभ्योऽथ घोरेभ्यः' इति। अथ रुद्रगायत्रीं जपेत् 'तत्पुरुषाय विद्महे' इति शतकृत्वोऽपरिमितकृत्वो वा दशवारं वा। अथैनमाशिषमाशास्ते 'ईशानः सर्वविद्यानाम्' इति। अथास्य मूर्धनि कलशधारया संततमभिषिञ्चन् 'नमस्ते रुद्र मन्यवे' इत्येकादशानुवाकाञ्जपेत्। 'सर्वो वै रुद्रः' 'इमा रुद्राय' इति द्वादशर्चमन्यांश्च रौद्रमन्त्राञ्जपेत्। जपानन्तरम् 'अग्नाविष्णू सजोषसेमा' इत्येकादशानुवाकानामेकैकमनुवाकं जपेत्। एतत् पापक्षयार्थी व्याधिमोचनार्थी श्रीकामः शान्तिकाम आयुष्काम आरोग्यकामश्च कुर्यात्; एवं कुर्वन्नेतत्सर्वमाप्नोति। पायसादिमहाहविर्निवेदयति। अथ दक्षिणां ददाति — दश गा एकादश, तदभावे एकां गां दद्यादित्याह भगवान् बोधायन इति। इत्थं श्रीरुद्रस्य

सकलपापनिवर्तकत्वेन, सर्वोपासनाफलप्रदत्वेन, सकृज्जपादे: ज्ञानप्रदत्वेन च कर्मोपासनाज्ञानकाण्डात्मकसकलवेदोत्तमत्वम्; तत्र च श्रुतिस्मृतीतिहासपुराणतात्पर्यं तज्जपासविधिश्चेत्ये तत्सर्वं निरूपितम् । इदानीं श्रीरुद्रोपनिषदमर्थतो व्याख्यास्यामः ॥



॥ ॐ ॥

# ॥ श्रीरुद्रभाष्यम् ॥



ॐ नमस्ते रुद्र मन्यव उतो त इषवे नमः । नमस्ते अस्तु धन्वने बाहुभ्यामुत ते नमः ॥

आनन्दमानन्दकरं प्रसन्नं
निजस्वरूपं निजबोधयुक्तम् ।
योगीन्द्रमीड्यं भवरोगवैद्यं
श्रीमद्गुरुं नित्यमहं नमामि ॥ १ ॥

विद्यागुम्भसुधापूरहृद्याननसुधांशवे ।
रक्षिणे सर्वलोकानां दक्षिणामूर्तये नमः ॥ २ ॥

इदानीं रुद्रोपनिषदर्थं व्याख्यास्यामः— अत्र ह्येकादशानुवाकाः; तत्र आद्ये भगवतः प्रसादः, द्वितीयादिष्वष्टसु सर्वेश्वरत्वसर्वात्मकत्वसर्वान्तर्यामित्वादिरूपेण भगवन्नमस्कारः; ततो दशमे भगवतः प्रार्थना; एकादशे

भगवदंशभूतरुद्रसंघप्रार्थनेत्येकादशात्मकश्रीरुद्राध्यायार्थः
तत्र तावन्निजपापक्षयार्थमीश्वरं प्रसादयितुं नमस्करोति—
**नमस्ते रुद्रेति** । हे रुद्र प्रणतदुःखद्रावक, ते तव
मन्यवे क्रोधाय, नमः अस्तु । न च निरस्तसमस्तदोषनि
खिलकल्याणगुणगणसमुद्रे भगवति कथं क्रोधप्रसक्तिरिति
वाच्यम्, दुष्टनिग्रहशिष्टानुग्रहस्वभावे निग्राह्यविषये क्रोध-
स्यालंकारत्वेनादोषत्वात्; 'श्रुतिस्मृतिर्ममैवाज्ञा यस्तामुल्लङ्घ्य
वर्तते । आज्ञाच्छेदी मम द्वेष्यः स मे वध्यश्च जायते'
इति भगवतैवोक्तत्वात् । न चैवं वैषम्यनैर्घृण्यप्रसक्तिरिति वा-
च्यम्, तत्तत्प्राणिकर्मानुसारेण निग्रहानुग्रहौ कुर्वतस्तस्य
तदप्रसक्तेरिति ब्रह्ममीमांसायां प्रपञ्चः । अत्र रुद्रेति हेतु-
गर्भं संबोधनम् । अत्र रुद्रशब्दो हि रुतं द्रावयतीत्यर्थे
'रुद्दुःखं दुःखहेतुर्वा तद्द्रावयति नः प्रभुः । रुद्र इत्युच्यते
तस्माच्छिवः परमकारणम्' इति पौराणिकैर्व्युत्पादितः
पृषोदरादिः; तथा च प्रणतदुःखतद्धेतुभूतपापद्रावकस्य तव
प्रणते मयि पापनिमित्तकः क्रोधः परिहर्तुं युक्त एवेति भावः ।
एवमग्रेपि रुद्रपदसंबोधनाभिप्रायो द्रष्टव्यः । इत्थं भगवन्तं
प्रसाद्य तदायुधान्यपि नमस्कारेण प्रसादयति— **उतो त**
**इति**; उतो अपि चेत्यर्थः; हे रुद्र, ते तव, इषवे बाणाय, नमः

अस्तु; तथा इष्वपादानभूताय तव धन्वने धनुषे, नमः अस्तु; उत अपि च, धनुर्बाणव्याप्ताभ्यां हस्ताभ्यां नमः अस्तु; श्रुतिस्मृतिरूपस्वाज्ञातिलङ्घिने पापिष्ठाय परमेश्वरः क्रुध्यति, ततस्तत्प्रहरणार्थमिषुरुपतिष्ठते, ततस्तदुपादाने धनुषि दृष्टिर्भवति, ततो धनुर्बाणग्रहणाय बाहू व्याप्रियेते इति क्रमः। अनेनैव क्रमेणात्र नमस्कारक्रमः। अनन्तविचित्रशक्तेः भगवतो दिव्यशक्तिविलासरूपा जगदुपास्यदेवतामूर्तय इव इष्वादय इति तन्नमस्कारप्रार्थनादिकं युक्तमेव। श्रूयते हि महाभारते— विस्मृतपाशुपतास्त्रसंधानप्रकारविशेषपरिज्ञानाय कृष्णार्जुनयोः कैलासयात्रायां तत्र कचिद्दिव्यसरस्यवस्थितं तदस्त्रमिहानयेति परमेश्वरनियोगेन तदर्थं गतयोः तत्र चानेकफणिमण्डलमुखोद्वान्तविषानलज्वालाकरालमतिभयंकरं पाशुपतास्त्रमासीत्; तच्च भगवतः श्रीकृष्णस्य शतरुद्रीयाध्यायजपमहिम्ना शान्तरूपं भूत्वा हस्तगतमासीदिति। तदेतदत्रानुसंधेयम्। अथास्य मन्त्रस्य ऋषिच्छन्दोदेवताः प्रदर्श्यन्ते, तज्ज्ञानं विना मन्त्रजपस्य निषिद्धत्वात्। अत एव छन्दोगा अधीयते— 'यो ह वा अविदितार्षेयच्छन्दोदेवतेन ब्राह्मणेन मन्त्रेण यजति वाध्यापयति वा स्थाणुर्वा भवति गर्तं वा पद्यते प्र वा मीयते पापी-

यान्भवति तस्मादेतानि मन्त्रे विधात्' इति । 'नमस्ते रुद्र मन्यवे' इति मन्त्रस्यात्रेयऋषिः, अनुष्टप्छन्दः, श्रीरुद्रो देवता । ध्यानम्— 'आकर्णकृष्टे धनुषि ज्वलन्तीं देवीमिषुं भास्वति संदधानम् । ध्यायेन्महेशं महनीयवेषं देव्या युतं योधतनुं युवानम्' । प्राजापत्यकृच्छ्रानुष्ठानपूर्वकमेकादशसहस्रजपादस्य मन्त्रस्य सिद्धिः । अनेन मन्त्रेण प्रदक्षिणनमस्काराभ्यां परमेश्वरप्रसादः पापक्षयः गाणपत्यं च भवति । तत्प्रयोगभेदास्तु रुद्रकल्पार्णवादौ द्रष्टव्याः, विस्तरभयान्नेह लिख्यन्ते । इति प्रथममन्त्रः ॥

**या त इषुः शिवतमा शिवं बभूव ते धनुः । शिवा शरव्या या तव तया नो रुद्र मृडय ॥**

एवं प्रथममन्त्रेण भगवन्तं सपरिकरं प्रसाद्य द्वितीयेन स्वस्य सुखं प्रार्थयते— या त इषुरिति । हे रुद्र, या ते तव, इषुः शिवतमा शान्ततमा बभूव, पूर्वं पापिष्ठे मयि घोररूपा सति नमस्कारेण शान्तरूपा जातेत्यर्थः । एवं यच्च ते धनुः शिवं शान्तरूपं बभूव, या च तव शरव्या शिवा बभूव, शरव्येति हिंसाहेतुरायुधविशेषः, 'अवसृष्टा परापत-

शर्व्ये ब्रह्मसंशिता ’ इति श्रवणात्; यद्वा शृणोतेर्हिंसाकर्मण उप्रत्यये शरुः, शरवः शराः, तेभ्यो हिता शरव्या इषुधिः, तया शरव्यया— उपलक्षणमेतत्— तेन धनुषा, तया इष्वा च नः अस्मान्, मृडय सुखय । अस्य मन्त्रस्य आत्रेयऋषिः, अनुष्टुप्छन्दः, शंभुर्देवता । ‘ ध्यायेद्देवं सस्मितं स्यन्दनस्थं देव्या सार्धं तेजसा दीप्यमानम् । इष्विष्वासालंकृताभ्यां भुजाभ्यां शूराकारं स्तूयमानं सुरौघैः’ । द्वादशदिनानि नित्यकर्माविरोधेन निशीथिनीव्यतिरिक्तकाले निरन्तरजपात्पुरश्चरणसिद्धिः; ततः प्रयोगार्हो भवति । दुर्भिक्षराष्ट्रक्षोभादिपरिहारप्रधानोऽयं मन्त्रः ॥

**या ते रुद्र शिवा तनूरघोरापापकाशिनी । तया नस्तनुवा शंतमया गिरिशंताभिचाकशीहि ॥**

एवं द्वितीयेन सांसारिकसुखमाशास्य तृतीयेन मोक्षहेतुज्ञानमाशास्ते— **या ते रुद्रेति** । हे रुद्र, ते तव, या तनूः प्रसिद्धा, श्रूयते हि— ‘तस्यैते तनुवौ घोरान्या शिवान्या’ इति; भारतेऽपि ‘ द्वे तनू तस्य देवस्य देवज्ञा ब्राह्मणा विदुः । घोरा चान्या शिवा चान्या ते चैव शतधा पुनः’

इति । सा तनूः कीदृशी— अघोरा आयुधैरकारणभयंकरी घोरा, सा न भवतीत्यघोरा ; न केवलं भयंकरत्वाभावमात्रवती, किंतु शिवा शिवंकरी सुखप्रदा, न केवलं सांसारिकसुखमात्रप्रदा, किं तु परमपुरुषार्थभूतमोक्षहेतुज्ञानप्रदापीत्याह— अपापकाशिनीति । अपापशब्देन पापविरोधिब्रह्मात्मतत्त्वज्ञानमुच्यते, 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत एवं ह वास्य सर्वे पाप्मानः प्रदूयन्ते' इति श्रुतेः, 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा' इति स्मृतेश्च । अपापस्य काशिनी प्रकाशयित्री ज्ञानप्रदेति यावत्, 'आत्मबुद्धिप्रकाशम्' इति श्रुतेः । एवंविधा या तव तनूरास्ति, तया शंतमया निरतिशयसुखरूपया तन्वा, नः अस्मान्, अभिचाकशीहि अभितः सर्वतः प्रकाशयुतान् कुरु; अद्वितीयब्रह्मात्मतत्त्वमेव सर्वतः प्रकाशय, 'यस्मिन्विज्ञाते सर्वमिदं विज्ञातम्' इति श्रुतेः । अभिचाकशीहीति यङ्लुगन्तप्रयोगेन भृशार्थरूपक्रियासमभिहारः प्रदर्शितः; अप्रतिबद्धापरोक्षब्रह्मसाक्षात्कारयुक्तान्कुर्वित्यर्थः । शंतमया अभिचाकशीहीत्यनेन परमेश्वरस्य चिदानन्दविग्रहत्वं प्रदर्शितम् । ननु मन्त्रमस्कारमात्रेण मोक्षमिच्छसि, तस्य श्रवणमनननिदिध्यासनादिबहुयत्नसाध्यत्वादित्याशङ्क्य संबोधयति— गि-

रिशंतेति । गिरि प्रतिज्ञारूपायां वाचि स्थित्वा लोकानां शं मोक्षसुखं तनोतीति गिरिशंतः, श्रवणाद्यायासं विनापि केवलं भगवन्नमस्कारघटितदिव्यनामधेयात्मकश्रीरुद्रजपमात्रेण युक्तो मोक्षाभिलाषः, 'एतैर्ह वा अमृतो भवति' इति श्रुतेः— इति द्वितीयसंबोधनस्वारस्यम् । अस्य मन्त्रस्य स्वाराट् ऋषिः, त्रिवृदनुष्टुप्छन्दः, शंभुर्देवता ; 'स्मेराननं चन्द्रकलावतंसं गङ्गाधरं शैलसुतासहायम् । त्रिलोचनं भस्मभुजंगभूषं ध्यायेत्पशूनां पतिमीशितारम्' । नित्यकर्माविरोधेन त्रिरात्रं निरन्तरजपात्पुरश्चरणसिद्धिः । गोशान्त्यादिफलप्रदोऽयं मन्त्रः । इति तृतीयः ॥

**यामिषुं गिरिशंत हस्ते बिभर्ष्यस्तवे । शिवां गिरित्र तां कुरु मा हिꣳसीः पुरुषं जगत् ॥**

एवं द्वितीयतृतीयाभ्यामिष्टसिद्धिः प्रार्थिता ; अथ चतुर्थमन्त्रेणानिष्टपरिहारं प्रार्थयते— यामिषुमिति । गिरौ कैलासे स्थित्वा लोकानां शं शिवं तनोतीति गिरिशंतः, हे गिरिशन्त, यामिषुं हस्ते बिभर्षि धारयसि ; किमर्थम्? अस्तवे असितुं पापिष्ठान् क्षेप्तुम् ; छन्दसि तुमर्थे तवेन्प्रत्ययः ।

तामिषुं शिवां कुरु शिवंकरस्त्वम् इषुं शिवां कर्तुमर्हसीति संबोधनाभिप्रायः । कीदृशमिषोः शिवत्वम्? तत्राह— मा हिꣳसीरिति । पुरुषम् अस्मदीयं पुत्रपौत्रादिरूपम्, तथा जगत् अस्मदीयगोमहिष्यादिकं गृहारामक्षेत्रादिकं च, मा हिंसीः; एतदेवेषोः शिवत्वकरणमिति भावः । अत्र गिरिशंतेत्यनेनैव चरितार्थतया पुनः 'गिरित्र' इति सं- बोधनमधिकं सत् अर्थविशेषं ज्ञापयतीति तं दर्शयामः— अकृत्याकार्यकृदपि मां भजते चेदवश्यं रक्षिष्यामीति परमेश्वरस्य प्रतिज्ञा; अत एव खलूपानुवाक्यकाण्डे 'मनुः पुत्रेभ्यो दायं व्यभजत्सनाभानेदिष्ठं ब्रह्मचर्यम्' इति प्रस्तुत्य 'तं पशुभिश्चरन्तं यज्ञवास्तौ रुद्र आ- गच्छत्सोऽब्रवीत् मम वा इमे पशव इत्यदुर्वै मह्यमिमानि- त्यब्रवीन्न वै तस्य त ईशत इत्यब्रवीत् यद्यज्ञवास्तौ हीयते मम वै तदिति तस्माद्यज्ञवास्तुनाभ्यवेत्यम्' इति नाभानेदि- ष्ठस्याकृत्यमुक्त्वा तं प्रति 'यज्ञे मा भजाथ ते पशून्ना- भिमंस्ये' इति भगवतः प्रतिज्ञा श्रूयते । पुराणेति- हासेषु च एवंजातीयकानि भूयांसि वचनान्यत्र वि- षयः । तथा च गिरि प्रतिज्ञारूपायां वाचि स्थित्वा भजतस्त्रायत इति गिरित्रः, हे गिरित्र, अकृत्यकारिणो-

ऽपि मम नाभानेदिष्ठस्येव त्वां भजतः पुत्रपौत्रादिकं पालयेति संबोधनाभिप्रायः । इति चतुर्थः ॥

**शिवेन वचसा त्वा गिरिशाच्छा वदामसि । यथा नः सर्वमिज्जगदयक्ष्मꣳ सुमना असत् ॥**

तदेवं नमस्ते रुद्रेति नमस्कृत्य द्वितीयतृतीयचतुर्थैरिष्टप्राप्त्यनिष्टपरिहारौ प्रार्थितौ; इदानीं स्तुतिपूर्वकं तदुभयं प्रार्थयते— **शिवेन वचसेति** । गिरिशब्देन गिरिरूपा वेदा उच्यन्ते, तत्र श्रुतिः— 'तं ह त्रीन् गिरिरूपानविज्ञातानिव दर्शयांचकार' इति प्रस्तुत्य, 'वेदा वा एते' इति । तथा च गिरिरूपेषु वेदेषु शेते तिष्ठतीति गिरिशः वेदप्रतिपाद्यः, हे **गिरिश, अच्छा** निर्मलम्, **त्वां शिवेन वचसा वदामसि** स्तुम इत्यर्थः । कीदृशी स्तुतिस्तत्राह— **यथा** येन प्रकारेण कृतया स्तुत्या, **नः** अस्माकं संबन्धि, **सर्वमित्** सर्वमपि, **जगत्** पशुपुत्रादिरूपं जङ्गमजातम्, **अयक्ष्मम्** अरोगम्, **सुमनाः** सौमनस्योपेतं सुखितं च, **असत्** स्यात्, तथा स्तुम इति; अत्र गिरिशेत्यनेन निखिलवेदवर्णनीयस्य स्तोत्रं युक्तमेवेति दर्शितम् । तत्र पापिष्ठस्य उक्तिसंबन्धात्परमेश्वरस्य

मालिन्यमाशङ्क्य 'अच्छ' इति पुनः संबोधयति । नित्यं निरवद्यस्य मलिनमदुक्तिसंबन्धेऽपि न काचित् क्षतिः; न हि गङ्गाजलस्य रथ्योदकसंयोगेन पावनता गच्छति, प्रत्युत गङ्गानुषङ्गाद्रथ्योदकमेव स्वयं च पावनीभूय यमुनोदकादि-विशेषत्वं प्रतिपद्यते, एवं परमपावने भगवति निवेशितं म-द्वचनमेव वेदवचनवल्लोकमान्यं भवतीति संबोधनाभिप्रायः। अत एव गङ्गाप्रवाहपतितस्य रथ्योदकस्य गङ्गात्वमिव शिवे पतितस्यापि मद्वचनस्य अतिशोभनतया शिवत्वमेव संपन्न-मित्यभिप्रेत्य शिवेन वचसेत्युक्तम् । तदेतत् चतुर्थपञ्चमम-न्त्रद्वयं मिलित्वा एको मन्त्रः । अस्य मन्त्रस्य गौतम ऋषिः गायत्रीछन्दः, रुद्रो देवता; 'सांग्रामिकेन वपुषा प्रविराज-मानं देवं पुरत्रयविनाशनमन्दहासम् । दैत्यान्दिधक्षुमचले-श्वरचापपाणिं ध्यायेत्पुरारिमथ भूमिरथाधिरूढम्'। एताभ्यां मन्त्राभ्यामकालमरणपरिहारादिर्भवति । एकविंशतिदिनानि निरन्तरजपात्पुरश्चरणसिद्धिः । इति पञ्चमः ॥

**अध्यवोचदधिवक्ता प्रथमो दैव्यो भि-षक् । अहीँश्च सर्वाञ्जम्भयन्सर्वाश्च या-तुधान्यः ॥**

नन्वेवं नमस्कारस्तोत्राभ्यां मयि प्रसादितेऽपि वैवस्वतचि-

अगुप्तादीनामतिदुर्दान्तानामन्येषां च त्वदीयपापसाक्षिभूता-नामन्येषां देवानां सत्त्वेन कथं तवानिष्टपरिहारः स्यादित्या-शङ्क्य त्वत्प्रसादे सति ते सर्वेऽप्यकिंचित्करा इत्याह—अध्यवोचदिति । पक्षपातवचनमधिवचनम्, 'यद्ब्राह्मण-श्चाब्राह्मणश्च प्रश्नमेयातां ब्राह्मणायाधिब्रूयात्' इति श्रव-णात् । तथा चायमर्थः— अधिवक्ता भक्तेभ्योऽधिवचनस्व-भावः, प्रथमः प्रधानभूतः श्रेष्ठ इति यावत्, दैव्यः देवेषु भवः देवान्तर्यामीत्यर्थः, भिषक् पापरोगसंसार-दारिद्र्यादिसकलव्यसनचिकित्सकः, 'भिषक्तमं त्वा भिषजां शृणोमि' इति श्रुतेः; एवंविधो भगवान्, अध्यवोचत् अ-धिब्रवीतु, 'छन्दसि लुङ्' इति लोडर्थे लुङ्, मदीयोऽयमिति पक्षपातं करोत्वित्यर्थः । किं कुर्वन्? सर्वानपि अहीन् सर्पवृश्चिकचोरव्याघ्रादीन्प्रत्यक्षहिंसकान्, सर्वाश्च यातुधा-न्यः यातुधानजातीः रक्षःपिशाचाद्यपस्माररूपाः परोक्षहिं-सिकाः, जम्भयन् नाशयन् अध्यवोचदिति । अत्र सर्वसमस्य भगवतः कथं त्वयि पक्षपातवचनम्, तथा सति वैषम्यनै-र्घृण्यप्रसङ्ग इति शङ्कापरिहारार्थमधिवक्तेत्युक्तम्; भक्तेष्वधि-वचनं हि भजनकर्मप्रयुक्तम्, अतो नेश्वरस्य दोषमावहति । 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' इति न्यायादिति भावः ।

सत्यपि भगवत्पक्षपाते वैवस्वतादिदेवतान्तरप्रयुक्तः पापफलानुभवः कुतो न स्यादिति शङ्कानिरासाय प्रथम इत्युक्तम् । 'यो देवानां प्रथमः पुरस्ताद्विश्वाधिको रुद्रो महर्षिः', 'तमीश्वराणां प्रथमं महेश्वरं तं देवतानां प्रथमं च दैवतम्', 'यो देवः सर्वदेवेषु महादेव इति स्मृतः । तस्मै नमस्तु कुर्वाणा दिवि तिष्ठन्ति देवताः' इत्यादिश्रुतिस्मृतीतिहाससहस्रावगतसर्वदेवताश्रेष्ठभावे भगवति मत्पक्षपातिनि सति न तदुपजीविदेवतान्तरप्रयुक्तदुःखशङ्कावकाश इति भावः । न केवलं मे देवतान्तरप्रयुक्तदुःखाभावमात्रम्, प्रत्युत सकलदेवतापूज्यत्वमपि ; यतः तदन्तर्यामितया तदीयपूज्यताबुद्धिप्रेरको भगवान् मत्पक्षपाती जात इत्येतद्दैव्य इत्यनेन देवान्तर्यामित्ववाचिना दर्शितम् । भिषगित्यनेन 'निदानज्ञश्च भिषजो रुग्णे हिंसां प्रयुञ्जतः । न किंचिदत्र नैर्घृण्यं घृणैवात्र प्रयोजिका' इति शिवपुराणोक्तभिषग्दृष्टान्तदर्शनेनोपपादितं भगवतः परमकारुणिकत्वमुक्तम् ; तेन च अहियातुधानीः हिंसतः तद्विषयेऽपि दयालुत्वमेव प्रदर्शितं भवति । यथा व्रणवैद्यः क्षारच्छेददाहादिभिः व्रणिनस्तात्कालिकदुःखकरोऽपि व्रणनिवारणेन तं सुखयन् दयालुरेव, तथा संसारवैद्यः परमेश्वरोऽपि अहियातुधानीः हिंसन्नपि तदीयक्रूरजन्महेतु-

दुरितनिवारणेन ताननघान् कृत्वा क्रमेण सुखं करोतीति न तस्य दयालुत्वक्षतिरिति । अधिब्रुवन् , जम्भयतु इत्यनुक्त्वा जम्भयन्नध्यवोचदित्युक्त्या भगवतः निरङ्कुशमीश्वरत्वं प्रदर्शितम् , अहियातुधानीनां तत्प्रेरकमृत्युदेवतानां च निग्रहे स्वयमशक्तश्चेत्खलु मदीयोऽयं न हिंसितव्य इति तदनुनयपूर्वकमहियातुधानीभ्यः प्रणतं मोचयन्भगवानधिब्रुवन् जम्भयत्विति प्रार्थयेत, न त्वेवम् ; किं तु स्वयं तच्छक्तः प्रथममहियातुधानीनाशनेन प्रणतं पालयन् देवैरागत्य कथमयं पापिष्ठः पाल्य इति पृष्टे मदीयोऽयं कुतोऽस्य पापमिति पक्षपातवचनं करोति, अत एव महापातकिनः किरातादीन् निनीषतो यमभटान्निजदूतैर्घातयित्वा परमेश्वरेण तेषु कैलासमानीतेषु यमचित्रगुप्तादिभिः तद्वृत्तान्ते विज्ञापिते तान्प्रति भगवता यदृच्छयापि मयि बिल्वदलक्षेपप्रणामादिकमाचरितवन्तो मदीयाः, तस्मान्नैतेषु भवतामधिकारोऽस्तीति उक्तमिति पुराणेषु बहुशः कथा जोघुष्यते । तदेतदभिप्रेत्य अग्रे 'रक्षा च नो अधि च देव ब्रूहि' इति प्रथमं रक्षणं पश्चादधिवचनं प्रतिपादयतीति सोऽयं मन्त्रो विषज्वररक्षःपिशाचादिनिखिलपीडानिवर्तकः ; अत एव कवचमित्यस्य नामधेयम् , यदाह भगवान् बोधायनः 'अध्यवोचदिति कवचम्' इति ।

अस्य मन्त्रस्य कण्वऋषिः, अनुष्टुप्छन्दः, शंभुर्देवता, 'चन्द्रार्धमौलिं कालारिं व्यालयज्ञोपवीतिनम् । ज्वलत्पावकसंकाशं ध्यायेद्देवं त्रिलोचनम्' । पञ्चायुतजपादस्य पुरश्चरणस्य सिद्धिः । इति षष्ठः ॥

**असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः । ये चेमाँ रुद्रा अभितो दिक्षु । श्रिताः सहस्रशोऽवैषाँ हेड ईमहे ॥**

इत्थं षड्भिर्मन्त्रैः परमेश्वरः प्रसाद्य प्रार्थितः । इदानीमखिलकर्मसाक्ष्यादित्यात्मा भगवान् द्वाभ्यां प्रसाद्य प्रार्थ्यते— **असौ यस्ताम्र** इति । यः पूर्वोक्तः भगवान् स एव **असौ** प्रत्यक्षं परिदृश्यमानः सूर्य इत्यर्थः, प्रत्यक्षं परिदृश्यमानमेव तद्रूपं विशेषणैर्दर्शयति— **ताम्रो अरुण उत बभ्रुः सुमङ्गलः** उदयकाले अत्यन्तरक्तवर्णः **ताम्रः**, तदनन्तरमीषद्रक्तः **अरुणः**, तत ऊर्ध्वं पिङ्गलवर्णः **बभ्रुः**, यदाहुः—'पिङ्गलो नकुलश्चैव खलतिर्विष्णुरेव च । चत्वार एते नैरुक्तैर्बभ्रवः समुदाहृताः' इति । स चान्धकारहिमादिवारणेन जगत्सौख्यहेतुत्वात् **सुमङ्गलः**; असति ह्यादित्यरूपे अस्मिन्भगवति अन्धकारादिग्रस्तं जगदमङ्गलमेव स्यादिति भावः ।

एवंभूत आदित्यात्मा भगवान्रुद्रः, ये च अन्ये रुद्रा आदित्येन सहैकीभूताः, इमाम् अभितः अस्या भूमेः परितः, दिक्षु श्रिताः परमेश्वरनियोगेन जनानां पुण्यपापानुरूपतयानुग्रहं निग्रहं च कर्तुं प्राच्यादिदिक्षु स्थिताः, ते च सहस्रशः अनेकसहस्रसंख्याकाः 'सहस्राणि सहस्रशः' इत्यग्रे वक्ष्यमाणाः, एषाम् आदित्यरूपाणां रुद्राणाम्, हेडः विहिताकरणनिषिद्धसेवानिमित्तक्रोधम्, अवेमहे स्तुतिनमस्कारादिभिः अपनयामः, ते अस्माकं प्रसन्ना भवन्त्वित्यर्थः । इति सप्तमः ॥

**असौ योऽवसर्पति नीलग्रीवो विलोहितः । उतैनं गोपा अदृशन्नदृशन्नुदहार्यः । उतैनं विश्वा भूतानि स दृष्टो मृडयाति नः ॥**

एवं सप्तमेन प्रसाद्य अष्टमेनेष्टसिद्धिं प्रार्थयते— असौ योऽवसर्पति इति । यः नीलग्रीवः 'त्रिलोचनं नीलकण्ठम्' इत्यादिश्रुतिप्रसिद्धः, स एव असौ विलोहितः विशेषेण लोहितः सन्, अवसर्पति प्रवर्तते, किमर्थं प्रवर्तते? तत्राह — उतैनम् इति । एनम् आदित्यरूपं परमेश्वरम्, गोपा

उत अज्ञानां प्रथमोदाहरणभूता गोपालका अपि, अदृशन् पश्यन्ति, तथा अदृशन्नुदहार्यः उदकस्य हारिकाः गोपालेभ्योऽप्यज्ञाः पश्यन्ति, कियदिति विभज्याभिधेयम् उतैनं विश्वा भूतानि गोमहिष्यादयः सर्वेऽपि प्राणिनः पश्यन्ति; तथा च सर्वानपि स्वदर्शनेनानन्दयितुमेव परमेश्वरः सूर्यात्मा अवसर्पति । श्रूयते हि— 'उद्यन्तं वा एतं सर्वाः प्रजाः प्रतिनन्दन्ति' इति । वेदान्तैकसमधिगम्यं तु सच्चिदानन्दाद्वैतरूपमतिदुर्विज्ञेयं कैलासादिवर्ति सगुणरूपमुपासकैरेव दृश्यं न तु सर्वैः, अतः सर्वप्रत्यक्षमेनं सर्वोऽप्युपास्य कृतकृत्यो भवति; अहो महिमेति भावः । सः तादृश आदित्यात्मा, दृष्टः अनुचिन्तितः, नः अस्मान्, मृडयाति सुखयतु । 'एताभ्यां मन्त्राभ्यामादित्यात्मा भगवानुपस्थेयः' इति ब्राह्मणम् । अत्र 'असौ यस्ताम्रः' इत्यस्य आस्तारपङ्क्तिच्छन्दः, 'असौ योऽवसर्पति' इत्यस्य षट्पदाजगतीच्छन्दः, द्वयोरपि मरुत्वानृषिः, आदित्यरूपी भगवान्देवता; 'मण्डलान्तरगतं हिरण्मयं भ्राजमानवपुषं शुचिस्मितम् । चण्डदीधितिमखण्डितद्युतिं चिन्तयेन्मुनिसहस्रसेवितम्' । एवं कृच्छ्राचरणपूर्वकं षोडशदिनेषु निरन्तरजपात्पुरश्चरणसिद्धिः । अनावृष्टिपरिहारकोऽयं मन्त्रः । इति अष्टमः ॥

**नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे । अथो ये अस्य सत्त्वानोऽहं तेभ्योऽकरं नमः ॥**

एवं सप्तमाष्टमाभ्यामादित्यरूपं प्रसाद्य, नवमेन भूकैलासिनं श्रीनीलकण्ठमूर्तिं प्रसादयितुं नमस्करोति— **नमो अस्त्विति** । **नीलग्रीवाय** नीलकण्ठमूर्तये **नमो अस्तु**, कीदृशाय? **सहस्राक्षाय** अपरिमितवाचकः सहस्रशब्दः, 'विश्वं शतं सहस्रं च सर्वमक्षयवाचकम्' इति स्मृतेः, सहस्रमक्षीणि यस्य, तस्मै सहस्राक्षाय अपरिच्छिन्नदृष्टये इत्यर्थः । अनेन कैलासवासिनोऽपि तव अत्र मदीयनमस्कारः दृष्टिविषय इत्युक्तं भवति । पुनः कीदृशाय? **मीढुषे** प्रणतकामवर्षिणे, अनेन समस्तेष्टसिद्धिरूपनमस्कारफलप्रदत्वं दर्शितम्; नीलग्रीवायेत्यनेन च कालकूटग्रसनकृतनीलकण्ठत्वशालिने इत्यर्थेन 'गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वेलाविवेश्वरः । शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति' इति प्रसिद्धो भगवन्महिमा स्मर्यते । तेन कालकूटविषतुल्यं दोषजालमन्तरेव नियम्य, कलामात्रमपि गुणं शिरसा श्लाघमानः परमेश्वरः सुखोपास्यो व्यज्यते । एवं भगवन्तं नमस्कृत्य तत्पारिषदान्नमस्करोति— **अथो य इति** । **अथो** अपि च, **अस्य** नील-

कण्ठमूर्तेः, सत्त्वानः सदनशीलाः प्रत्यासन्नाः प्रमथगणाः ये वर्तन्ते; प्रसिद्धा हि 'दिव्या गणा बहुरूपाः पुराणाः' इति श्रुतिषु भगवतः पारिषदाः; सामवेदे च—'अधिपताइ क्षत्रपताइ' इत्यादिना सर्वाधिपत्येनोक्ताः; भारतेऽपि सौप्तिके पर्वणि— 'कामकारकराः सिद्धास्त्रैलोक्यस्यैश्वरेश्वराः। नित्यानन्दाः प्रमुदिता वागीशा वीतमत्सराः॥ प्राप्याष्टगुणमैश्वर्यं येऽपि यान्ति न विस्मयम्। येषां विस्मयते नित्यं कर्मभिर्भगवान्भवः॥ श्रुतेन ब्रह्मचर्येण तपसा च दमेन च। ये समासाद्य शूलाङ्कं भवसायुज्यमागताः' इति; द्रोणपर्वणि च—'तस्य पारिषदा दिव्या नानारूपधराः प्रभोः' इत्यादिना प्रपञ्चिताः। पुराणेषु च परःसहस्रं तन्माहात्म्यवचनानि, तत्र 'सहस्राणि सहस्रशः' इत्यत्र कियदपि उदाहरिष्यते। एवमथो ये अस्य सत्त्वानः प्रमथगणाः तेभ्यः नमः अकरं नमस्करोमि। अस्य मन्त्रस्य ऋषिः देवता च भगवानेव। त्रिष्टुप्छन्दः। 'शरच्चन्द्रप्रकाशेन वपुषा शीतलद्युतिम्। ध्यायेत्सिंहासनासीनमुमया सहितं शिवम्'। सुपुत्रावाप्तिप्रधानोऽयं मन्त्रः। पुरश्चरणविधिः सर्वोऽप्यर्णवे द्रष्टव्यः। इति नवमः॥

प्रमुञ्च धन्वनस्त्वमुभयोरार्त्नियोर्ज्या-

मू। याश्च ते हस्त इषवः परा ता भगवो वप ॥

अथ दशमादिषड्भिरायुधान्युपसंहारयितुं प्रार्थयते । यद्यपि 'शिवां गिरित्र तां कुरु मा हिंसीः' इत्यादिना पूर्वमेव प्रार्थितम्, तथापि भयातिशयात्पुनः प्रार्थ्यते; अतो न पुनरुक्तिशङ्कावकाशः। प्रमुञ्चेति। हे भगवः भगवन्, 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा' इति वचनोक्तसमग्रैश्वर्यादिषड्गुणसंपन्नम्, 'मतुवसो रु संबुद्धौ छन्दसि' इति रुत्वम्। धन्वनः त्वदीयधनुषः संबन्धिन्यौ ये आर्त्नी कोटी, तयोः स्थितां ज्यां मौर्वीं त्वं प्रमुञ्च शिथिलीकुरु; न हि समग्रैश्वर्यादिसंपन्नस्य तव धनुरन्यः कश्चिदवरोपयितुं शक्नोति, 'इमा रुद्राय स्थिरधन्वने गिरः' इत्यादिश्रुतेः; अतस्त्वमेव प्रसन्नो भूत्वा धनुरवततज्यं कुर्वित्यर्थः। एवं धनुषि अवरोपितेऽपि शराः कवलयन्त इव दृश्यन्ते, अतः हे भगवः भगवन्, याश्च ते तव हस्ते इषवः वर्तन्ते, ताः परा वप पराङ्मुखीकुरु। इति दशमः॥

अवतत्य धनुस्त्वꣳ सहस्राक्ष शतेषुधे।

**निशीर्य शल्यानां मुखा शिवो नः सुमना भव ॥**

एवं पराङ्मुखीकरणमर्थयित्वा तावन्मात्रेण भयशान्तिमलभमान इषूणां कुण्ठिताग्रत्वमाशास्ते— **अवतत्येति** । शतसहस्रशब्दावानन्त्यवाचिनौ, हे **सहस्राक्ष** अनन्तलोचन, **शतेषुधे** अनन्ततूणीरेत्यर्थः, इषुधीनामानन्त्यादेव इष्वानन्त्यमप्युक्तं भवति; लोके हि परिमितदृष्टिः परिमिततूणीरश्च वेद्धा धानुष्को दृष्टिपथपरिहारे बाणव्यये वा सति वेद्धुं न प्रभवतीति कथंचिदनुवर्तितुं शक्यः, त्वं तु अपरिच्छिन्नदृष्टिरपरिमितबाणः न कथंचिदनुवर्तितुं शक्य इति संबोधनद्वयस्वारस्यम्; अतः मदीयोपायदुष्परिहरे अस्मिन्नर्थे **त्वमेव धनुः अवतत्य** अवरोपितज्याकं कृत्वा, **शल्यानां** बाणानाम्, **मुखा** मुखानि, **निशीर्य** इषुधिषु न्यग्भावेन शीर्णानि कुण्ठिताग्राणि कृत्वा, एवंकृतेऽपि वेद्धरि क्रूरे सति मनो न विश्राम्यति, अतो विशिनष्टि— **शिव इति** । सौम्याकार इत्यर्थः; हार्दं विना बहिः सौम्याकृतित्वमात्रं न विस्रम्भपदमित्यतः **सुमना भवेति** । शरणागतोऽयमनुग्राह्य इति दयामृतशीतलो भवेत्यर्थः । इत्येकादशः ॥

**विज्यं धनुः कपर्दिनो विशल्यो बाणवाँ२ उत । अनेशन्नस्येषव आभुरस्य निषङ्गधिः ॥**

इदानीं कुण्ठिताग्राणामपि बाणानामदर्शनं प्रार्थयन्नाह— विज्यमिति । कपर्दिनः परमेश्वरस्य, धनुः विज्यं विज्याकम्, अस्त्विति शेषः ; बाणवान् उत इषुधिरपि, विशल्यः विगतबाणोऽस्तु । इषुधेर्विशल्यत्वेऽपि अन्यत्र स्थितैः शल्यैर्वेधमाशङ्क्याह— अनेशन्निति । अस्य कपर्दिनः इषवः अनेशन् वेद्धुमसामर्थ्यरूपं विनाशं प्राप्नुवन्तु, नशेराशिषि छन्दसि लङ् । किं च, अस्य निषङ्गधिः खड्गकोशः, आभुः ईषत्प्रभुरस्तु, खड्गं धारयितुमेव समर्थः न तु खण्डनार्थं खड्गाकर्षणपर्यन्तकार्यक्षम इत्यर्थः । अत्र प्रमुञ्च धन्वन इत्याद्यास्त्रय एको मन्त्रः ; अस्य त्र्यृचस्य नारद ऋषिः, अनुष्टुप्छन्दः, श्रीरुद्रो देवता । 'उद्यद्भास्करकोटिप्रकाशमादीप्तदहनधामानम् । भीषणभुजंगभूषं ध्यायेद्विविधायुधं रुद्रम्' । अनेन शत्रवो नश्यन्ति । इति द्वादशः ॥

**या ते हेतिर्मीढुष्टम हस्ते बभूव ते**

**धनुः । तयास्मान्विश्वतस्त्वमयक्ष्मया प-रिब्भुज ॥**

एवं त्रिभिर्मन्त्रैरायुधोपसंहारमर्थयित्वा तैरिदानीमात्मर-क्षणमाशास्ते— **या ते हेतिरिति** । हे **मीढुष्टम** अतिशयेन भक्तकामवर्षिन् इति हेतुगर्भसंबोधनम्, **या ते** तव, **हेतिः** खङ्गाद्यायुधम्, **यदपि ते हस्ते धनुः बभूव** भवति, **तया अयक्ष्मया** भक्तारोग्यहेतुभूतया हेत्या, ते तव धनुषा चेत्यपि द्रष्टव्यम्; **त्वम् अस्मान् विश्वतः** सर्वस्माद्दुरितात्, **परि-ब्भुज** परिपालय । इति त्रयोदशः ॥

**नमस्ते अस्त्वायुधायानातताय धृष्ण-वे । उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने ॥**

अथैवं प्रार्थ्य पुनर्नमस्करोति— **नमस्ते इति** । हे भ-गवन्, **ते** तव, **आयुधाय नमः अस्तु** । कीदृशाय? **अना-तताय** प्रहर्तुं व्यापृतम् आततम्, तदन्यत् अनाततम्, तस्मै; **धृष्णवे** स्वरूपेण प्रहर्तुं समर्थाय, **उत** किंच, **ते** तव, **उभाभ्यां** बाहुभ्यां **नमः** अस्तु, बाहुभ्यामिति द्विवचनेनैव द्वित्वे सिद्धेऽपि वेद्धुमुद्यतं बाहुद्वयमुपलभ्य भयातिरेकात्

**नमो हरिकेशायोपवीतिने पुष्टानां पतये नमः ॥**

अथ पञ्चमः— **नमो हरिकेशायेति** । नीलालकमूर्धजसहितो हरिकेशः, नित्ययुवेति यावत्; **उपवीती** यज्ञोपवीतवान्, आदिब्राह्मणः, सामवेदे— 'विरूपाक्षोऽसि दन्ताञ्जिः' इति प्रस्तुत्य 'त्वं देवेषु ब्राह्मणोऽसि अहं मनुष्येषु ब्राह्मणो वै ब्राह्मणमुपधावति उप त्वा धावानि' इति प्रपद्ब्राह्मणश्रुतेः, 'आदिब्राह्मणमीशानमुपधावेन्न चेतरम् । ब्रह्मतेजोधिकं राजन्न क्षात्रं वैश्यसंभवम् ॥ सर्वेषामधिको यस्माद्भगवान्ब्राह्मणः शिवः' इति पराशरसंहितादिवचनात् । पुष्टशब्दश्च देवेन्द्रादिपदप्रज्ञैश्वर्यादिपरिपूर्तिमद्वाची, ब्रह्मादिस्थावरान्तेषु ये ये पुष्टाः तेषां स्वामी, **पुष्टानां पतये नमः** इत्यर्थः । अत्र आदिब्राह्मणस्य परमेश्वरस्य ब्रह्मादिसर्वोपास्यत्वावश्यंभावेन स्वोपासकांस्तान् पुष्टिदानेनानुगृह्णतस्तस्य पुष्टानां पतित्वमुपपन्नमित्येतत् 'उपवीतिने' इत्यनेन प्रदर्शितम् । स्वयं पुष्टः परस्मै पुष्टिं प्रयच्छति, परमेश्वरस्य नित्ययूनोर्देहेन्द्रियादिपुष्टिर्नित्यासिद्धेति लोकेभ्यस्तस्य तत्प्रदत्वमुचितमित्यौचित्यरूपं वस्तुसामर्थ्यं हरिकेशपदेन व्यज्यते ॥

**नमो भवस्य हेत्यै जगतां पतये नमः ॥**

इत्थं पञ्चभिर्मन्त्रैर्दिगादिकतिपयवस्त्वाधिपत्यप्रदर्शनपूर्वकमीश्वरो नमस्कृतः; इदानीं प्रतिवस्त्वाधिपत्यवचनपूर्वकनमस्कारस्याशक्यतया जगत्पतित्वेन तं नमस्कर्तुं षष्ठो मन्त्रः प्रयुक्तः— **नमो भवस्येति** । भवः संसारः, तस्य च्छेदने हेतिः आयुधम्, संसारवृक्षस्य च्छेत्तेत्यर्थः । स्थावरजङ्गमानां लोकानां स्वामी **जगतां पतिः**, तस्मै **नमः** । यद्यपि 'पशूनां पतये नमः' इत्यत्रैव ब्रह्मादिस्थावरान्तसकलजगत्पतित्वमुक्तम्, तथापि संसारपाशबन्धहेतुत्वेन तदुक्तम्; अत्र संसारमोचकत्वेनेति भेदः, उभयोरपि ब्रह्मधर्मत्वात् ॥

**नमो रुद्रायाततायिने क्षेत्राणां पतये नमः ॥**

अथ उक्तमेव जगत्पतित्वमुपपादयितुं श्रमावधि धावनन्यायेन पुनरपि तत्तद्वस्त्वाधिपत्येन भगवन्तं नमस्कर्तुमारभते सप्तमादिभिः— **नमो रुद्रायेति** । रुद्रः संसारदुःखद्रावकः, अत एव आततज्येन धनुषा अवति रक्षतीति आततावी क्षेत्राणि शरीराणि, 'इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते' इति स्मृतेः, तेषां स्वामी **क्षेत्राणां पतिः**, तस्मै **नमः** इत्यर्थः । लोके हि देशाधिपतिरुपद्रवेभ्यो देशवासिनो रक्षति,

इभाक्ष्यामिति पुनर्ब्रवीति । तथा तव धन्वने नमोऽस्तु इति । इति चतुर्दशः ॥

**परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः । अथो य इषुधिस्तवारे अस्मन्नि-धेहि तम् ॥**

अथ नमस्कृत्य पुनः प्रार्थयते— **परि ते धन्वन इति ।** हे भगवन् ते **धन्वनः** धनुषः संबन्धिनी, धनुष्यारोपितेति यावत्; एतादृशी या **हेतिः** बाणरूपमायुधम्, सा हेतिः **अस्मान् विश्वतः** सर्वस्मादुपद्रवात्, **परिवृणक्तु** परिवर्जितान् करोतु, रक्षत्वित्यर्थः । कथं पुनः पापराशौ विद्यमाने तव उपद्रवपरिहारः स्यात्? तत्राह— **अथो** अपि च, **यः तव इषुधिः** यत्र तीक्ष्णा इषवस्तिष्ठन्ति, **तम् अस्मत्** अस्माकं संबन्धिनि, **आरे** अरीणां समूहे पापराशौ, **निधेहि** स्थापय, नाशयेत्यर्थः । इति पञ्चदशो मन्त्रः । अत्र या ते हेतिरित्यादित्र्यृचस्य अनुष्टुप्छन्दः, ऋषिर्देवता च भगवानेव । 'प्रणमदमरसंघमौलिमालाकुसुमरजोरुणपादपद्मयुग्मम् । अनवरतमनुस्मरेद्भवान्या सह जगतां पितरं पिनाकपाणिम्' । शत्रुनाशप्रधानोऽयं मन्त्रः ॥

नमस्ते अस्तु भगवन्विश्वेश्वराय महादेवाय त्र्यम्बकाय त्रिपुरान्तकाय त्रिकाग्निकालाय कालाग्निरुद्राय नीलकण्ठाय मृत्युंजयाय सर्वेश्वराय सदाशिवाय श्रीमन्महादेवाय नमः ॥

इति प्रथमोऽनुवाकः ॥



## द्वितीयोऽनुवाकः ॥

---

**नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमः ॥**

तदेवं प्रथमेऽनुवाके पञ्चदशभिर्मन्त्रैर्भगवान् सपरिकरः प्रसाद्य प्रार्थितः । अथेदानीं द्वितीयाद्यैरष्टभिरनुवाकैः सर्वेश्वरत्वसर्वान्तर्यामित्वरूपेण भगवन्तं नमस्करिष्यन् प्रथमं सर्वेश्वरत्वेन नमस्करोति । एतदारभ्य 'श्वभ्यः श्वपतिभ्यश्च वो नमः' इत्यन्तं सर्व एव उभयतो नमस्कारा एते मन्त्राः । सर्वत्र च नमआदिर्नमोऽन्त एकैको मन्त्रः, यथा — 'नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमः' इति । एवमग्रेऽपि । तत्र तावत् प्रपञ्चान्तर्गतैकैकवस्त्वाधिपत्यप्रदर्शनपूर्वकं भगवतः सर्वेश्वरत्वमुपपादयन् नमस्कर्तुमारभते— **नमो हिरण्याबहवे इति** । हिरण्यबाहवे हिरण्मयकेयूराद्यलंकृतबाहवे, बाहुग्रहणं चोपलक्षणम्, आपादमस्तकमतिदिव्यकनकखचितभूषणतया स्वरूपेण च सर्वोऽपि कनकवर्ण एव दिव्यमङ्गलविग्रह इति हि श्रुतयः प्रथयन्ति । यथा— 'नमो हिरण्यबाहवे हिरण्यवर्णाय' 'आप्रणखात्सर्वे

एव सुवर्णः' 'यदा पश्यः पश्यते रुक्मवर्णम्' इत्याद्याः; 'रुक्माभं स्वप्नधीगम्यम्' 'चारुचामीकराभासम्' इत्याद्याः स्मृतयोऽपि । सेनान्ये सेनाः नयतीति सेनानीः, देवासुरसिद्ध[illegible]न्धर्वमनुष्यादिसंघातरूपनानासेनापतिः; उक्तं हि आश्वलायनेन शिवं प्रस्तुत्य— 'सर्वाणि ह वा एतस्य नामधेयानि । सर्वाश्च सेनाः सर्वाणि चोच्छ्रयणानि' इति । तस्मै सेनान्ये, तथा दिशां प्राच्यादीनाम्, पतये स्वामिने, नमः अस्तु, 'षष्ठीयुक्तश्छन्दसि वा' इति घिसंज्ञा; अत्र 'दिशां पतये नमः' इति प्रथममन्वयः । तत्र कथं परमेश्वरस्य दिक्पतित्वम्? इन्द्राग्न्यादीनामेव तथात्वादिति शङ्कानिरासाय 'सेनान्ये' इति विशेषितम्; तेन सकलदेवतासङ्घाधिपतेः परमेश्वरस्यैव दिगाधिपत्यम्, इन्द्रादयस्तु तदाज्ञया तत्तद्दिगधिष्ठातार इति प्रदर्शितम् । परमेश्वरस्य इन्द्राद्याधिपत्यं कथमित्याकाङ्क्षायां हिरण्यबाहव इति विशेषितम्; तेन हि 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' इति अन्तरादित्यविद्योपास्यं पारमेश्वररूपमुच्यते, अत एव 'नमो हिरण्यबाहवे' इत्यस्य अन्तरादित्यविद्योपासने पुराणादिषु विनियोगः कृतः; 'ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां च' इति अन्तरादित्यवि-

न्यवाक्योक्तस्वर्गादिलोकतद्भोगैश्वर्यविशिष्टं परमेश्वररूपमुपपादयता 'हिरण्यबाहवे' इत्यनेन स्वर्गतद्भोगादीनीन्द्रादिभ्यः प्रयच्छतस्तस्य तदधिपतित्वं युक्तमिति प्रदर्शितं भवति । प्रसिद्धं च परमेश्वरस्य श्रुत्यादिष्विन्द्राद्याधिपत्यम्, यथा— 'सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते' 'कारणं तु ध्येयः सर्वैश्वर्यसंपन्नः शंभुः' इति, 'भीषास्मादग्निश्चेन्द्रश्च' इत्यादयः । इतिहासपुराणेषु च; यथा भारते— 'स ददाति मनुष्येभ्यः स एवाक्षिपते पुनः । शक्रादिषु च देवेषु तस्यैवैश्वर्यमुच्यते' इति । भागवतेऽपि 'ब्रह्मादयो यत्कृतलोकपालाः' इति । शिवपुराणेषु च प्रपञ्चितम् । तदेवमिन्द्रादिलोकपालविशिष्टसकलदिक्पतित्वेन परमेश्वरनमस्कारः प्रथममन्त्रार्थ इति ॥

**नमो वृक्षेभ्यो हरिकेशेभ्यः पशूना पतये नमः ॥**

अथ द्वितीयः— **नमो वृक्षेभ्यः** इति । अत्र 'पशूनां पतये' इति प्रथममन्वयः; पशुपदं चेह न गवादिमात्रपरम्, किंतु द्विपाच्चतुष्पात्साधारणप्राणिमात्रपरम्; 'एषामीशे पशुपतिः पशूनां चतुष्पदामुत च द्विपदाम्' इति, एतावन्तो वै पशवो द्विपादश्च चतुष्पादश्च' इत्यादिश्रुतेः । तथा च सकलप्राण्य-

धिपतये इत्यर्थो भवति । तत्र कथं प्राणिनाम् ईश्वरं प्रति पशुत्वम्, कथं च भगवतस्तत्पतित्वम् इत्याकाङ्क्षायां तदुपपादनाय वृक्षेभ्यो हरिकेशेभ्यः इत्युक्तम् । अत्र हरितवर्णाः केशाः पलाशरूपा येषाम्, तेभ्यो वृक्षेभ्यो रुद्ररूपेभ्यो नमः ; तथा पशूनां पतये च नमः— इति प्राचीनव्याख्यानमनेन निरस्तम् । अस्मिन्पक्षे वृक्षपदस्य पाशुपत्योपपादकत्वाभावात् 'पशूनां पतये' इत्यनेन सह न संबन्धः, नापि सर्वेश्वरत्वप्रकरणे वृक्षात्मत्वप्रतिपादनसंगतिः, न वा हरिकेशेभ्य इति विशेषणस्य किंचित्प्रयोजनम्, अग्रे च 'नमो वृक्षेभ्यो हरिकेशेभ्यो नमस्ताराय' इति वृक्षात्मकत्वस्य वक्ष्यमाणत्वात्पुनरुक्तिः । अतः अत्रार्थविशेषेण भवितव्यम् । तमेनं दर्शयामः— वृक्षपदमिह संसारवृक्षपरम्, 'ऊर्ध्वमूलमवाक्शाखम्' 'वृक्षं यो वेद संप्रति' 'अहं वृक्षस्य रेरिवा' इत्यादिश्रुतेः ; 'अव्यक्तमूलप्रभवस्तस्यैवानुग्रहोत्थितः । बुद्धिस्कन्धमयश्चैव इन्द्रियान्तरकोटरः' 'ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्' इति स्मृतेश्च । अत्रापि 'भवस्य हेत्यै जगतां पतये नमः' इत्यग्रेतनमन्त्रे परमेश्वरस्य संसारच्छेदकायुधत्वोक्त्या संसारस्य वृक्षत्वाविष्करणाच्च । हरिकेशपदमपि हरितवर्णत्वोपलक्षितत्रिगु-

णात्मककर्मकाण्डरूपपलाशलक्षणकेशवैशिष्ट्यपरम्, 'त्रैगु-ण्यविषया वेदाः' 'छन्दांसि यस्य पर्णानि' इति च स्मृतेः। यथा वृक्षस्य रक्षार्थानि पर्णानि भवन्ति, तथा संसारवृक्षस्य रक्षार्थानि कर्मकाण्डात्मकानि छन्दांसि, तेषां संसाराभिवृद्धिकरकर्मप्रतिपादकत्वात्; तानि च शिरोरुहवदानन्त्यत्वात्केशत्वेन निरूपितानि। एवं च 'नमो वृक्षेभ्यो हरिकेशेभ्यः' इति मन्त्रभागस्य विविधकर्मजालानुविद्धसंसारवृक्षात्मकत्वेन परमेश्वरनमस्कारोऽर्थः पर्यवसितः। अनेन च कथं पशुत्वम्, कथं पतित्वमिति प्रश्नद्वयमुत्तरितं भवति; संसारपाशबद्धत्वेन प्राणिनां पशुत्वम्, तैः स्वकार्यकारयितृत्वेन परमेश्वरस्य तत्पतित्वमिति च तदर्थलाभात्। तदेतल्लैङ्गे स्पष्टमुपबृंहितम्— 'ब्रह्माद्याः स्थावरान्ताश्च देवदेवस्य शूलिनः। पशवः परिकीर्त्यन्ते संसारवशवर्तिनः॥ तेषां पतित्वाद्देवेशः शिवः पशुपतिः स्मृतः। ब्रह्मादिस्तम्बपर्यन्तान्पशून्बद्ध्वा महेश्वरः॥ पाशैरेतैः पतिर्देवः कार्यं कारयति स्वयम्। स एव मोचकस्तेषां भक्त्या सम्यगुपासितः' इति। एवं स्कान्दशैवकूर्मपुराणवचनान्यप्युदाहार्याणि। अत्र 'ब्रह्माद्याः स्थावरान्ताः' इत्युक्त्या 'एषामीशः' इति मन्त्रे द्विपाच्चतुष्पाद्ग्रहणं चेतनाचेतनात्मकसकलप्रपञ्चोपलक्षणमिति

ख्यातं भवति । यथा गवाश्वमहिषादयस्तत्स्वामिभिः पाशैराबध्य स्ववशीकृत्य स्वाराधनरूपतया तदुपयोगितया वा स्वकीयेषु तत्तद्वस्तुषु तत्तद्वस्तुसामर्थ्याधीनेषु कर्मसु विनियुज्यन्त इति ब्रह्मादिस्थावरान्तानां पशुत्वं परमेश्वरस्य तत्पतित्वं चेत्यभिप्रायः । यत्पुनः श्रूयते— 'सोऽब्रवीद्वरं वृणा अहमेव पशूनामधिपतिरसानीति तस्माद्रुद्रः पशूनामधिपतिरिति भगवतः पाशुपत्यं वरलब्धम्' इति, तत्तु अज्ञानमोहितो लोकः पशुपाशपशुपतीन्विवेक्तुमसमर्थतया स्वतो न मोक्तुं शक्त इति करुणया स्वकीयं पाशुपत्यं वरव्याजेन लोके स्पष्टीकृतमिति शिवपुराणेष्वेव 'स्वतःसिद्धं पतित्वं मे युष्माकं पशुतापि च । तदेतद्व्यथयाम्यद्य वरबन्धविनोदनैः' इत्यादिना व्याख्याताभिप्रायम् । युक्तं च संसारबन्धरूपपशुत्वस्यानादितया तद्बन्धकत्वरूपपतित्वस्याप्यनादित्वप्राप्त्या तस्य वरलब्धत्वोक्त्ययोगात् । न हि बन्धकं विना बन्धः संभवति । श्रुतिस्मृत्याद्युद्घोषितस्वतःसिद्धपरमेश्वरभावे भगवति पाशुपत्यवरणस्य तल्लाभस्य तं प्रति कस्यचिद्वरदातुश्च कथमपि विचारासहत्वाच्चेत्यास्तां तावत् ॥

**नमः सस्पिञ्जराय त्विषीमते पथीनां पतये नमः ॥**

अथ तृतीयः— **नमः सस्पिञ्जरायेति** । सस्पिति बालतृणमुच्यते, पिञ्जर इति पीतरक्तः संकीर्णवर्णः, बालतृणवत्पिञ्जरः सस्पिञ्जरः तस्मै; त्विषीमते प्रकाशवते, पथीनां पतये वैदिकतान्त्रिकमार्गाणां स्वामिने **नमः** इत्यक्षरार्थः । अत्र त्विषीमत इत्यनेन ज्ञानरूपः प्रकाश उच्यते, तेन चेयं शङ्का निरस्ता भवति । एवं ह्यत्र शङ्कावतरति— कथं परमेश्वरेण तान्त्रिकमार्गाः प्रदर्शिताः ? 'या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः । सर्वास्ता निष्फलाः प्रेत्य निष्ठा तेषां हि तामसी ' इति तेषां निन्दितत्वादिति । अत्र चेदमुत्तरम्— सत्यमेव तान्त्रिकमार्गाणां निन्दितत्वम्, तत्तु वैदिकान् प्रत्येव; वेदबाह्यानां तु तान्त्रिकमार्गा एवोपकारकाः, तदेतदालोच्य सर्वज्ञेन परमेश्वरेण तन्त्राणि प्रणीतानि; यदि ह्येतानि न स्युः, ततो वेदबाह्याः पापिष्ठास्ततो वैदिकमार्गविमुखाः श्रेयःसाधनमन्यच्च शास्त्रमजानन्तः स्वेच्छाचारप्रावण्यविवशाः प्रणष्टा एव भवेयुः । अतस्तान्त्रिकमार्गप्रवर्तनमुचितमिति । तदेतत्कूर्मपुराणे स्पष्टमुपबृंहितम्, तत्र हि— 'स तेषां मायया जातं गोवधं गौतमो मुनिः । केनापि हेतुना ज्ञात्वा शशापातीव कोपनः ॥ भविष्यथ त्रयीबाह्या महापातकिनः समाः ' इति वेदबाह्यत्वेन महापापि-

ष्ठत्वेन च गौतमशप्तान् प्रस्तुत्य, ‘ते सर्वे प्राप्य देवेशं शंकरं विष्णुमव्ययम् । अस्तुवन्विविधैः स्तोत्रैरुच्छिष्टा इव सेवकाः’ इत्यादिना तेषां शंकरविष्णुसंनिधौ प्रार्थनामुपन्यस्य, ‘तस्माद्वै वेदबाह्यानां रक्षणार्थं च पापिनाम् । विमोहनाय शास्त्राणि करिष्यावो वृषध्वज ॥ एवं संचोदितो रुद्रो माधवेन मुरारिणा । चकार मोहशास्त्राणि केशवोऽपि शिवेरितः ॥ कापालं लागुडं शाक्तं भैरवं पूर्वपश्चिमम् । पाञ्चरात्रं पाशुपतं तथान्यानि सहस्रशः’ इत्यादिना वेदबाह्यानां पापिष्ठानां रक्षणाय पाशुपतपाञ्चरात्रादितन्त्रमार्गः प्रवर्तित इत्युक्तम् । विमोहनाय इत्यस्य चायमर्थः— अस्ति च पाशुपतपाञ्चरात्रादितन्त्रेषु वेदविरुद्धार्थप्रतिपादनम्; यथा—केवलनिमित्तेश्वरवादः, जीवोत्पत्त्यादिवर्णनम्, तद्विषये वेदनिन्दा चेति; तच्च सर्वमप्रमाणमेव, व्यवस्थापितं हि तदंशे तदप्रामाण्यं ब्रह्ममीमांसायाम्; तेषु च वेदनिन्दायास्तद्विरुद्धवर्णनस्य च प्रयोजनम्— ये वैदिका एव सन्तः पापवशाद्वेदेष्वविश्वासं कुर्वन्ति, तान्विमोहयितुम्; तच्च विमोहनं तेषामनुग्रहायैव । ते हि वेदद्विषस्तन्त्रेषु स्थितां वेदनिन्दामुपश्रुत्य बहुमन्यमाना वेदं विहाय तान्त्रिकमार्गमनुप्रविश्य तेन विधिना परमेश्वरमाराध्य तत्पुण्यक्षतवेदद्वेषदोषाः क्रमेण ज-

न्मान्तरे वेदनिष्ठां प्रतिपद्य कृतकृत्या भवन्ति । अत एव वैदिकस्यैव सतः शाण्डिल्यस्य वेदनिष्ठां विहाय पाञ्चरात्रादिदीक्षाविधिना विष्णुमाराधितवतो निन्दापूर्वकं तं प्रति चिराय वेदमार्गं गमिष्यसीति भगवता वासुदेवेन वरो दत्त इति वासिष्ठलैङ्गे श्रूयते— मत्तन्त्राश्रयणेनैव मत्पूजा च कृता त्वया । तया न प्रीतवानस्मि तव शाण्डिल्य ते प्रियः ॥ कुमार्गेणापि शाण्डिल्य कृता पूजा मम त्वया । अतः कालेन महता वेदमार्गं गमिष्यसि’ इति । पापिष्ठविषये परमेश्वरस्य मोहकत्वं तद्विषये द्वेष इव तदनुग्रहपर्यवसितत्वान्न दोषमावहति । अत एव खलु बुद्धाद्यवतारेषु भगवतो नारायणस्य विमोहकत्वं बहुशः प्रख्यायते । न हि तत्तस्य दूषणं भवतीति। तदेतत्सर्वमत्र ‘विमोहनाय शास्त्राणि’ इत्यनेनाभिप्रेतम्। एवमन्यान्यप्यस्मिन्विषये बहूनि वचनानि सन्ति; तानि सर्वाण्यप्यस्माभिः पाषण्डगजकेसरिण्युदाहृतानि ; तत्रैव द्रष्टव्यानि । तदेवं वेदबाह्यानां रक्षणाय सर्वज्ञेन भगवता तान्त्रिकमार्गः प्रवर्तित इत्येतत् ‘त्विषीमते’ इत्यनेन प्रदर्शितम्। तदुपरि कांश्चिद्वेदाधिकारिणः कांश्चिद्वेदबाह्यांश्च सृजतः परमेश्वरस्य वैषम्यनैर्घृण्यदोषमाशङ्क्य ‘सस्पिञ्जराय’ इत्यनेन संकीर्णवर्णविशेषवाचिना तथाभूतत्रैगुण्यप्रधानत्वरू-

पार्थद्योतकेन तत्परिहृतम् । अनाद्यविद्योपचिततत्तद्गुणकर्मा-नुसारेण तथा सृजतो न वैषम्यादिप्रसक्तिः, 'पुण्यः पुण्येन कर्मणा भवति पापः पापेन' इत्यादिश्रुतेरिति भावः ॥

**नमो बभ्रुशाय विव्याधिनेऽन्नानां पतये नमः ॥**

अथ चतुर्थः— नमो बभ्रुशायेति । बिभर्ति परमेश्वरमिति बभ्रुः वृषभः, 'कुर्भ्रश्च' इत्युणादिसूत्रेण भृञ्धातोः कुप्रत्यये द्विर्वचने धातोर्यणादेशे किस्त्वात् गुणवृद्धिप्रतिषेधे च सति बभ्रुरिति रूपनिष्पत्तिः । बभ्रौ शेते तिष्ठतीति बभ्रुशः वृषवाहनः ; 'बभ्लुशाय' इति पाठे लकारे बभ्लुरेव बभ्रुरिति व्याख्येयम् । विशेषेण विध्यतीति विव्याधी, अन्नानाम् अदनीयानां भक्ष्यभोज्यलेह्यशोष्यरूपाणां पदार्थानां स्वामी, तस्मै नमः इत्यर्थः । अत्र बभ्रुशायेत्यनेन धर्मरूपवृषभमधितिष्ठतोऽन्नस्वामित्वं युक्तम्, 'यज्ञाद्भवति पर्जन्यः पर्जन्यादन्नसंभवः' इत्यन्तस्य धर्मकार्यत्वश्रवणादिति प्रदर्शितम् । 'विव्याधिने' इत्यनेन 'ये अन्नेषु विविध्यन्ति' 'येषामन्नमिषवः' इति च श्रुतेः अन्नेन इषुणा विध्यतोऽन्नपतित्वमुचितम् । तन्नियम्यस्यैव तदिषुत्वादिति हेत्वन्तरम् ॥

तेषु च स्वाश्रितान्सुखविशेषेण संयोजयति, तथा क्षेत्राधिपतिः परमेश्वरोऽपि क्षेत्रस्थितान्रक्षति, न ह्यन्यः परमेश्वराद्रक्षकोऽस्ति; 'येन जातानि जीवन्ति' इति श्रुतेः। अत एव खल्वाशास्यते— 'तयास्मान्विश्वतस्त्वमयक्ष्मया परिभुज' इति; तदेतदाततावियदेनोक्तम्। क्षेत्रस्थितेष्वपि स्वाश्रितान्सुखविशेषेण योजयतीत्येतत् रुद्रपदेनोक्तम्, 'जन्तोर्म्रियमाणस्य रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृती भूत्वा मोक्षी भवति' इति श्रुतेः। क्षेत्रपदस्याविमुक्तादिक्षेत्रपरत्वे विशेषस्वारस्यं द्रष्टव्यम् ॥

**नमः सूतायाहन्त्याय वनानां पतये नमः ॥**

अथाष्टमः— नमः सूतायेति। जगद्यन्त्रसारथिः सूतः, 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया' इति स्मृतेः। हन्तुमशक्य इति अहन्त्यः, वनानाम् अरण्यानाम्, पतिः स्वामी, तस्मै नम इत्यर्थः; तथा वनस्वामित्वे जगन्नियन्तृत्वरूपहेतुः सूतशब्देन प्रदर्शितः। जगन्नियच्छतोऽपि तद्विकारैः नोपहतिरित्येतदहन्त्यपदेन ज्ञाप्यते च ॥

**नमो रोहिताय स्थपतये वृक्षाणां पतये नमः ॥**

अथ नवमः— **नमो रोहितायेति** । लोहितवर्णो रोहितः, स्थाता चासौ पाता चेति **स्थपतिः**, पृषोदरादिः ; एवंभूताय **वृक्षाणां पतये** स्वामिने **नमः** इत्यर्थः । अत्र स्थपतिशब्देन वृक्षस्वामित्वे हेतुरुच्यते, वृक्षेषु स्थित्वा वृक्षान्पालयतस्तत्स्वामित्वौचित्यात् । रोहितशब्देन वृक्षाधिष्ठातुः परमेश्वरस्य स्वरूपमुक्तं भवति, 'ये वृक्षेषु सस्पिञ्जरा नीलग्रीवा विलोहिताः' इति हि वक्ष्यते । इति नवमः ॥

**नमो मन्त्रिणे वाणिजाय कक्षाणां पतये नमः ॥**

अथ दशमः— **मन्त्रिण** इति । वनगुल्मादयोऽतिगहनपदार्थाः कक्षाः तेषां स्वामी **कक्षाणां पतिः**, तस्मै **नमः** इति प्रथममन्वयः ; ननु अतिगहनेषु कथमीश्वरस्याधिपत्यं स्यात्? दुरवगाहत्वादित्याशङ्क्य विशिनष्टि— **वाणिजायेति**। वणिजां समूहो वाणिजः, यथा वणिक् सर्वजनपदव्यवहारान्परिच्छिद्य विशदीकरोति, तथा अयमपि सकलवस्तुजातमिति, नास्य किंचिद्दुरवगाहमस्तीति भावः । कैमुति-

न्यायेनापि कक्षाणां पतित्वमुपपादयति— मन्त्रशब्देन सप्तकोटिमहामन्त्राः, तथा वेदरहस्यभूता उपनिषदः, सर्वे-गुप्तवादाश्चाभिधीयन्ते ; तेषां स्वामी मन्त्री, धनस्वामी धनी-तिवत् ; न हि धनसंबन्धमात्रेण धनवोढारं धनीति व्यव-हरन्ति ; तथा च एवंविधेष्वपि गहनेषु यस्य स्वामित्वम् 'ईशानः सर्वविद्यानाम्' इत्यादिश्रुतिषूद्धुष्यते, तस्य किमु वक्तव्यं कक्षाणां पतित्वे इति भावः । इति दशमः ॥

**नमो भुवंतये वारिवस्कृतायौषधीनां पतये नमः ॥**

अथैकादशः— नमो भुवंतय इति । भुवं तनोतीति भुवंतिः, तस्मै, वारिवस्कृताय वरिवः परिचर्या, अस्य क-र्तारः वरिवस्कृताः भक्ताः, तेषु तिष्ठतीति वारिवस्कृतः ; सर्वगतस्यापि परमेश्वरस्य भक्तेषु सांनिध्यातिशयवशादियमु-क्तिः । अत एव खलु 'यथायोऽग्निसमावेशान्नायो भवति केवलम् । तथैव मम सांनिध्यान्न ते केवलमानुषाः ॥ शि-वस्य परिपूर्णस्य किं नाम क्रियते नरैः । यत्कृतं शि-वभक्तानां तच्छिवस्य कृतं भवेत् ॥ अकायो भक्तकायः स्यात्' इति पुराणवचनानि श्रूयन्ते । ओषधीनां व्री-

ह्यादीनाम्, पतिः स्वामी, तस्मै नमः इत्यर्थः । अत्र भुवंतय इत्यनेन ओषधिस्वामित्वे हेतुरुच्यते, सकलभूवलयस्रष्टृतया तत्स्वामिनः परमेश्वरस्य भूविकारौषधिस्वामित्वस्यापि तत एव प्राप्तेः; वारिवस्कृतायेत्यनेन च भक्तकायस्थत्वोक्त्या 'नाहं तथाद्मि यजमानहविर्विताने श्च्योतद्घृतप्लुतमदन्हुतभुङ्मुखेन । यद्ब्राह्मणस्य मुखतश्चरतोऽनुघासं तुष्टस्य मय्यवहितैर्निजकर्मपाकैः' इति भगवतोक्तं भक्तमुखेन भगवतो भोक्तृत्वमाविष्कृतम् । तेन चौषधिफलभोक्तृत्वेनापि परमेश्वरस्यौषधिस्वामित्वं तत्फलभोक्तुस्तत्स्वामित्वौचित्यात् इत्युक्तं भवति । एवं परमेश्वरभोजनरूपत्वातिशयमभिप्रेत्यैव उपासकैः कृतमेव मे भोजनं नान्यैः कृतमिति श्रुतिस्मृत्यादिभिराम्नायते— 'अन्तरिच्छति तं जनो रुद्रं परमो मनीषया गृह्णाति जिह्वया रसं केवलाघो भवति केवलादी' इत्याद्याः श्रुतयः, 'अन्तरिच्छति यो रुद्रं सदा वन्द्यं मनीषया । गृह्णाति जिह्वया सोऽन्नं रसपूर्णामृतोदकम् । अन्तर्नेच्छन्ति ये रुद्रं भवान्या सहितं भवम् । पुरीषमेव गृह्णन्ति जिह्वया ते न संशयः' इत्यादिपराशरपुराणवचनानि । इत्येकादशः ॥

**नम उच्चैर्घोषायाक्रन्दयते पत्तीनां पतये नमः ॥**

अथ द्वादशः— नम उच्चैर्घोषायेति । युद्धादिषु उच्चैरु-च्छ्रितो घोषो यस्य उच्चैर्घोषः, तस्मै ; आक्रन्दयते वैरिणां रोदयित्रे, तन्नाशकायेति यावत्; पत्तीनां पदातीनाम्, स्वामिने नमः इत्यर्थः । अत्र पत्तीनां पतये इत्यनेन पदा-दिसापेक्षमीश्वरस्य शौर्यमिति प्राप्ते तन्निवारणाय स्वयमेव शत्रुनाशने सामर्थ्यं दर्शयितुम् आक्रन्दयते इत्युक्तम् । स्वयं शत्रुनाशनेऽपि नायुधाद्यपेक्षा, किं तु हुंकारमात्रेण तदिति दर्शयितुम् उच्चैर्घोषाय इत्युक्तम् । तथा च आयु-धपरिवारादिकमलंकारमात्रम्, हासवीक्षणनखादिभिस्त्रिपुर-मन्मथयमादीन् नाशितवतस्तदपेक्षाविरहादिति भावः । इति द्वादशः ॥

**नमः कृत्स्नवीताय धावते सत्त्वनां पतये नमः ॥**

अथ त्रयोदशः— नमः कृत्स्नवीतायेति । कृत्स्नं ज-गत् वीतम् अधिष्ठानतया अन्तर्यामितया च व्याप्तं येन, स कृत्स्नवीतः, तस्मै ; धावते भक्तान् रक्षितुं पृष्ठतोऽनुव्रजते, 'वत्सं गौरिव गौरीशो धावन्तमनुधावति' इति वचनात्; सत्त्वनां सात्त्विकानाम्, पतये स्वामिने नमः । अत्र स-

स्वनां पतित्वे धावते इत्यनेन हेतुरुक्तः, गोवत्सन्यायेन पृष्ठतोऽनुव्रज्य सात्त्विकान्रक्षतस्तत्स्वामित्वौचित्यात्; 'कृत्स्नवीताय' इत्यनेन तदेव धावनमुपपाद्यते, सर्वव्यापिना सर्वतो भक्ताननुधावितुं शक्यत इति। इदमेव खलु कृत्स्नवीतत्वेन भगवतः सर्वतो रक्षकत्वं वाजसनेयिनां गृह्ये श्रूयते— 'अपः प्रवेक्ष्यन्ननुमन्त्रयते नमो रुद्रायाप्सुषदे स्वस्ति मा संपारय इति, पन्थानं गच्छन्ननुमन्त्रयते नमो रुद्राय पथिषदे स्वस्ति मा संपारय इति, वनं प्रवेक्ष्यन्ननुमन्त्रयते नमो रुद्राय वनसदे स्वस्ति मा संपारय इति, तस्माद्यत्किंचित्कुर्वन्स्यात् तत्सर्वम् नमो रुद्राय इति कुर्यात्, सर्वेषु रुद्र इति श्रुतेः' इति। सोऽयं द्वितीयानुवाक एको मन्त्रः। अस्य च मण्डूक ऋषिः; महागायत्रीच्छन्दः; श्रीरुद्रो देवता। 'मुक्तालंकृतसर्वाङ्गमिन्दुगङ्गाधरं हरम्। ध्यायेत्कल्पतरोर्मूले समासीनं सहोमया' शत्रुनाशनवशीकरणाद्यैश्वर्यलाभप्रधानोऽयं मन्त्रः॥

इति द्वितीयोऽनुवाकः॥



## तृतीयोऽनुवाकः ॥

---

**नमः सहमानाय निव्याधिन आव्याधिनीनां पतये नमः ॥**

अथ द्वितीय इव तृतीयेऽपि आदावष्टभिर्मन्त्रैः सर्वेश्वरत्वेन भगवान्नमस्क्रियते । तत्र प्रथमः— **नमः सहमानायेति** । **सहमानाय** शत्रून् अभिभवते, यद्वा, भक्तापराधान्क्षममाणायेत्यर्थः । नितरां विध्यतीति **निव्याधी**, तस्मै; आ समन्तात् विध्यन्तीति **आव्याधिन्यः** शूरसेनाः, तासां स्वामिने **नमः** । अत्र आव्याधिनीनां पतित्वे सहमानाय निव्याधिने इति हेतुगर्भे विशेषणे, विध्यतां मध्ये नितरां विध्यतो निखिलपरिभवशक्तस्य च श्रेष्ठत्वेन तथाविधस्य तत्स्वामित्वौचित्यात्; सहमानपदस्य भक्तापराधसहमानार्थत्वे तु तस्येत्थं स्वारस्यं द्रष्टव्यम्— ननु यदि परमेश्वरः सर्वापेक्षया स्वयमतिशयेन वेधकृत् आव्याधिनीनां पतिः, तर्हि लोकाः सर्वेऽपि दत्तजलाञ्जलय इव स्युः; पापरहितस्य कस्याप्यभावेन प्राणिमात्रस्यापराधितया परमेश्वरवध्यत्व-

स्यापरिहार्यत्वादित्याशङ्क्य, भक्तापराधसहनस्वभावे भगवति नेयं शङ्केत्याह— सहमानायेति । इति प्रथमः ॥

**नमः ककुभाय निषङ्गिणे स्तेनानां पतये नमः ॥**

अथ द्वितीयः— **नमः ककुभायेति** । **ककुभाय** महते, **निषङ्गिणे** खड्गवते, **स्तेनानां** गुप्तचोराणां स्वामिने **नमः** । अत्र ककुभशब्दवाच्यमहत्त्वस्य प्रतियोग्याकाङ्क्षायाम्, स्ववाक्योपात्तस्तेनानामेव तत्प्रतियोगित्वेनान्वयः; तथा च स्तेनेषु महत्त्वं स्तेनस्वामित्वे हेतुः ककुभाय इत्यनेन चोच्यते । निषङ्गिणे इत्यनेन स्तेनक्रियापेक्षितोपकरणसंपत्तिः प्रदर्श्यते । इति द्वितीयः ॥

**नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमः ॥**

अथ तृतीयः— **नमो निषङ्गिण इति** । धनुषि संधातुं हस्ते धृतो बाणः **निषङ्गः**, पृष्ठे बद्धो बाणाधारः **इषुधिः**, तदुभययुक्ताय; **तस्कराणां** प्रकाशचोराणां स्वामिने **नमः** । अत्र तस्कराधिपत्यानुगुणरूपप्रदर्शनार्थत्वेन विशेषणे संगमयितव्ये । इति तृतीयः ॥

**नमो वञ्चते परिवञ्चते स्तायूनां पतये नमः ॥**

अथ चतुर्थः— **नमो वञ्चत इति** । ये स्वकीया एव भूत्वा अन्यैरज्ञाताः सन्तः द्रव्यमपहरन्ति, ते **स्तायवः**, तेषां स्वामिने **नमः** । देवस्य स्तायुस्वामित्वमुपपादयितुं वञ्चते परिवञ्चत इति विशेषणे; स्वामिन आप्तो भूत्वा तदीयद्रव्यक्रयविक्रयादिव्यवहारेषु यत्र कुत्रापि यत्किंचिद्द्रव्यापहारी वञ्चन्नित्युच्यते, सर्वेष्वपि व्यवहारेषु अपहववकृत् परिवञ्चन्नित्युच्यते, तद्रूपायेत्यर्थः । इति चतुर्थः ॥

**नमो निचेरवे परिचरायारण्यानां पतये नमः ॥**

अथ पञ्चमः— **नमो निचेरव इति** । अरण्येषु वर्तमानाश्चोरा आरण्याः, तेषां स्वामिने **नमः**; एतदेवोपपादयति— **नमो निचेरवे परिचरायेति** । आरण्यकचोरापेक्षयाप्यपहारविषये नितरां संचरणशीलो निचेरुः, एवं तदपेक्षया परितोऽपहर्तुं संचरणशीलः परिचरः, तादृशस्य तेषु श्रेष्ठत्वात्तत्स्वामित्वं युक्तमिति भावः । इति पञ्चमः ॥

**नमः सृकाविभ्यो जिघाᳬसद्भ्यो मुष्णतां पतये नमः ॥**

अथ षष्ठः— **नमः सृकाविभ्य इति ।** सृकेण यन्त्रेणात्मानमवन्तीति **सृकाविणः,** प्राणिनो हन्तुमिच्छन्तो जिघांसन्तः, तदुभयरूपाय; **मुष्णतां** केदारादिषु धान्यचोराणां स्वामिने नमः । अत्रापि मुष्णतां पतित्वं समये स्वरक्षणचतुरस्य तद्विरोधिनो जिघांसत एव भवतीति विशेषणद्वयम् । बहुवचनं छान्दसम्, अन्यथा विशेषणविशेष्यभावायोगात् । एवमुत्तरमन्त्रेऽपि । इति षष्ठः ॥

**नमोऽसिमद्भ्यो नक्तंचरद्भ्यः प्रकृन्तानां पतये नमः ॥**

अथ सप्तमः— **नमोऽसिमद्भ्य इति । असिमन्तः** खड्गधारिणः, **नक्तंचरन्तः** रात्रिचराः, तद्रूपायेत्यर्थः । हत्वैवापहरन्तश्चोराः **प्रकृन्ताः,** तेषां स्वामिने नमः । अत्र प्रकृन्तस्वामित्वानुगुणस्वरूपप्रदर्शनाय विशेषणद्वयम् । इति सप्तमः ॥

**नम उष्णीषिणे गिरिचराय कुलुञ्चानां पतये नमः ॥**

अथाष्टमः—उष्णीषिण इति । कुं भूमिं गृहक्षेत्रादिरूपां लुञ्चन्त्यपहरन्तीति कुलुञ्चाः, तेषां स्वामिने नमः । द्विविधाः कुलुञ्चाः—ग्रामेषु स्थित्वा उष्णीषिणो दुष्प्रवर्तकतया दुर्बलानां क्षेत्राद्यपहर्तारः केचित्, केचित्तु गिरिवनाद्याश्रयेण बलिष्ठाः सन्तो लोकानां क्षेत्रादीनपहरन्ति; तदुभयरूपत्वम् उष्णीषिणे गिरिचरायेति विशेषणाभ्यां क्रमेण प्रदर्शितम् । तादृशस्य कुलुञ्चस्वामित्वं युक्तमिति भावः ॥

## नम इषुमद्भ्यो धन्वाविभ्यश्च वो नमः ॥

तदेवम् 'नमो हिरण्यबाहवे' इत्यादिभिरेतदन्तैरेकविंशत्या मन्त्रैर्दिगाद्येकैकवस्त्वाधिपत्यप्रदर्शनेन 'जगतां पतये नमः' इति साक्षाच्च कण्ठरवेण भगवतः 'एष सर्वेश्वर एष लोकाधिपतिः' इति श्रुतिप्रसिद्धमखिलजगदीश्वरत्वमुक्त्वा, इदानीमेकैकवस्त्वात्मकत्वेन भगवतः सर्वात्मकत्वं वर्णयन्नमस्कर्तुमारभते— नम इषुमद्भ्य इत्यादिना । लोकानवितुमिषून् धनुश्चाहवे हस्ते वहन्तः इषुमन्तः धन्वाविनः, ते च देवासुरमनुष्यरूपेण जगति यावन्तो वर्तन्ते, तद्रूपेभ्यो वः युष्मभ्यं नमः; परमेश्वरांशानां वस्तुतस्तदभिन्नानां च घोरतररुद्राणां बहुत्वात्तत्संबोधनाभिप्रायेण व इति बहुवचनम् । तथा च असह्या ह्येते घोरतरा रुद्रा ये

उभयतो नमस्काराः, अथैते शान्ततरा रुद्रा ये अन्यतो नमस्कारा इति ॥

**नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमः ॥**

अथ द्वितीयः— नम आतन्वानेभ्य इति । धनुषि ज्यामारोपयन्तः आतन्वानाः, आततज्ये धनुषि शरान् संदधानाः प्रतिदधानाः ; ते च जगति यावन्तः तद्रूपेभ्यः वो नमः इति पूर्ववत् ॥

**नम आयच्छद्भ्यो विसृजद्भ्यश्च वो नमः ॥**

अथ तृतीयः— नम आयच्छद्भ्य इति । ज्याकर्षणं कुर्वन्तः आयच्छन्तः, आकृष्य बाणान् मुञ्चन्तः विसृजन्तः ; शेषमत्र पूर्ववद्द्रष्टव्यम् ॥

**नमोऽस्यद्भ्यो विध्यद्भ्यश्च वो नमो नम आसीनेभ्यः शयानेभ्यश्च वो नमो नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमो नमः सभाभ्यः सभापतिभ्यश्च वो नमो नमो**

**अश्वेभ्योऽश्वपतिभ्यश्च वो नमः ॥**

अथ चतुर्थः— **नमोऽस्यद्भ्य इति** । मुक्तस्य बाणस्य लक्ष्यपर्यन्तं गमनम् असनम्, तत्कर्तारः अस्यन्तः; लक्ष्यसमीपगतस्य लक्ष्ये प्रवेशो वेधः, तत्कर्तारो विध्यन्तः, 'नम आसीनेभ्यः' इत्यादयः 'अश्वपतिभ्यश्च वो नमः' इत्यन्ताः पञ्च मन्त्राः स्पष्टार्थाः । सोऽयमुभयतो नमस्काररूपसप्तदशयजुरात्मकावान्तरमन्त्रसमुदायरूपस्तृतीयोऽनुवाक एको मन्त्रः; अस्य भगवानेव ऋषिः, स एव देवता, बृहतीच्छन्दः । ध्यानम्—'रूपयौवनसंपन्ना मूर्तेव वनदेवता । पुष्पितानेकपुंनागसहकारशिखोपमा ॥ पञ्चविंशतिनक्षत्रमयूराकृतिशेखरः । अकलङ्कशरत्पूर्णचन्द्रबिम्बसमाननः ॥ प्रातर्विबुद्धपद्माभं वसानं चर्म कोमलम् । सव्यापसव्यविधृतकृतमालाविभूषितः ॥ धराकदम्बपुञ्जेन नाभिदेशप्रलम्बिना । आजङ्घं प्रेक्षणीयेन प्रेक्षणीयोऽपि शत्रुभिः ॥ भूधरस्य च चार्वङ्गी कन्यालंकारशोभिता । आदर्शमूर्तिः शोभानामन्या नारीव निर्मला ॥ तस्या हस्ते धनुर्दत्त्वा शरमेकं च निर्मलम् । तदीयमंसमालम्ब्याश्लिष्टं वामेन बाहुना ॥ सुगन्धिपुष्पस्तबकमाघ्रायाघ्राय पाणिना । वीज्यमानो मन्दमन्दं वनपल्लवशाखया ॥ समावृतो बालकैश्च श्वभिश्चापि मनोहरैः ।

गच्छद्भिरागतो दृष्टैर्ध्यातव्यो जगतां गुरुः ।। एवंरूपो महा-तेजाः किरातवपुरीश्वरः' इति । स्वराष्ट्र्याधिपरराष्ट्राभि-चारशत्रुनाशनादिफलप्रदोऽयं मन्त्रः । प्राजापत्यपूर्वकपञ्च-सहस्रजपादयं मन्त्रः सिध्यति । ततः प्रयोगार्हो भवति ।।

इति तृतीयोऽनुवाकः ।।



## चतुर्थोऽनुवाकः ॥

---

**नम आव्याधिनीभ्यो विविध्यन्तीभ्य-श्च वो नमः ॥**

अथ चतुर्थोऽनुवाकः— तृतीय इव चतुर्थेऽपि भगवान्सर्वात्मकत्वेन नमस्क्रियते । तत्र प्रथमः— नम आव्याधिनीभ्य इति । आ समन्ताद्वेद्धुं शक्ताः स्त्रियः आव्याधिन्यः, विविधं वेद्धुं शक्ताः स्त्रियः विविध्यन्त्यः, ताश्च जगति यावन्त्यः सन्ति, तावद्रूपेभ्यो वः नमः इति पूर्ववत् ॥

**नम उगणाभ्यस्तृꣳहतीभ्यश्च वो नमः ॥**

अथ द्वितीयः— नम उगणाभ्य इति । उत्कृष्टगणाः उगणाः सप्तमातृकाद्याः, तथा हिंसितुं समर्था दुर्गाद्या उग्रदेवताः तृंहन्त्यः, तद्रूपेभ्य इति पूर्ववत् ॥

**नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमः ॥**

अथ तृतीयः—नमो गृत्सेभ्य इति । गर्धनशीला गृत्साः

विषयलंपटाः, तेषां पतयः गृत्सपतयः ; शेषं पूर्ववत् ॥

**नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमः ॥**

अथ चतुर्थः— नमो व्रातेभ्य इति । नानाजातीयाः संघाः व्राताः, तेषां पतयः व्रातपतयः ॥

**नमो गणेभ्यो गणपतिभ्यश्च वो नमः ॥**

अथ पञ्चमः— नमो गणेभ्य इति । गणाः प्रमथाः, तेषां पतयः नन्दिकेश्वरादयः ॥

**नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमः ॥**

अथ षष्ठः— नमो विरूपेभ्य इति । विरूपाः विकृतरूपाः, नानारूपाः विश्वरूपाः ; यद्वा, ब्रह्मणो वस्तुतोऽविकारत्वेन परमार्थतो विगतरूपाः, 'समारोप्यस्य रूपेण विषयो रूपवान् भवेत्' इति न्यायेन शुक्तिकायां रजतमिव ब्रह्मणि अध्यस्तं विश्वरूपमिति विश्वरूपाः ॥

**नमो महद्भ्यः क्षुल्लकेभ्यश्च वो नमः ॥**

अथ सप्तमः— नमो महद्भ्य इति । अणिमाद्यष्टैश्वर्यो-

येताः महान्तः, तद्रहिताः क्षुल्लकाः ॥

नमो रथिभ्योऽरथेभ्यश्च वो नमो नमो रथेभ्यो रथपतिभ्यश्च वो नमो नमः सेनाभ्यः सेनानिभ्यश्च वो नमो नमः क्षत्तृभ्यः संग्रहीतृभ्यश्च वो नमो नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमो नमः पुञ्जिष्टेभ्यो निषादेभ्यश्च वो नमो नम इषुकृद्भ्यो धन्वकृद्भ्यश्च वो नमो नमो मृगयुभ्यः श्वनिभ्यश्च वो नमो नमः श्वभ्यः श्वपतिभ्यश्च वो नमः ॥

अथाष्टमः— नमो रथिभ्य इति । रथवन्तः रथिनः, तद्रहिताः अरथाः; नवमादयः श्वपतिभ्य इत्यन्ताः नव मन्त्राः स्पष्टार्थाः । तत्र च रथचालकाः सारथयः क्षत्तारः, त एव रथं नियच्छन्तः संग्रहीतारः, तक्षरथकारयोरवान्तरभेदाद्भेदः; कर्माराः लोहकाराः, पक्षिपुञ्जानां घातुकाः पुञ्जिष्ठाः, निषादाः श्वपचाः, शुनकगलबद्धपाशधराः श्व-

पतयः । शेषं स्पष्टम् । तदेतत् 'इषुमद्भ्यः' इत्येतदन्तैः षड्विंशतिमन्त्रैः प्रपञ्चान्तर्गतैकैकवस्त्वात्मकत्वप्रदर्शनेन 'विश्वरूपेभ्यः' इति साक्षात्कण्ठरवेण च भगवतश्चेतनाचेतनात्मकसकलप्रपञ्चरूपत्वमुपवर्णितम् । एतच्च 'नमो ज्येष्ठाय च' इत्यग्रे वक्ष्यमाणमपि सार्वात्म्यमुपलक्षयति, तेन च शिवाद्वैतमुक्तं भवति । तथा च श्रुतयः— 'प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते' 'न सन्न चासच्छिव एव केवलः' 'एक एव रुद्रो न द्वितीयाय तस्थे' 'विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत्। सर्वो ह्येष रुद्रः' 'सर्वो वै रुद्रः' 'अहमेव प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चन मत्तो व्यतिरिक्तः' इति । स्मृतयश्च— 'भूतानि शंभुर्भुवनानि शंभुर्वनानि शंभुर्गिरयश्च शंभुः' इत्याद्याः । तत्र चेतनाचेतनात्मकानां चेतनस्वरूपैक्यम् 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्यादिप्रमाणसहस्रानुरोधात् । अचेतनात्मकत्वं तु आरम्भणाधिकरणन्यायेन तदध्यासाधिष्ठानत्वम्; अध्यस्तस्य अधिष्ठानव्यतिरेकेणासत्त्वस्य शुक्तिकारजतादौ दृष्टत्वेन रजताध्यासाधिष्ठानस्य शुक्तिकायाः रजतात्मकत्ववज्जगदध्यासाधिष्ठानस्य ब्रह्मणो जगदात्मकत्वादिति ब्रह्ममीमांसायां प्रपञ्चः । एतेन 'श्वभ्यः श्वपति-

भ्यश्च' इत्यतिनिकृष्टैः श्वादिभिः सह भगवतः कथमैक्यं श्रुत्या प्रतिपाद्यत इति शङ्का निरस्ता; न हि श्वशब्दवाच्यदेहविशिष्टाभेदः श्रुत्योच्यते, किंतु तल्लक्ष्यं निष्कृष्टोपाधि यज्जीवचैतन्यम् उच्चनीचभावापन्नेषु शरीरेष्वनुस्यूतं तदात्मकत्वम् । तदेतद्गीतायां स्पष्टीकृतं भगवतैव— 'विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि । शुनि चैव श्वपाके च पण्डिताः समदर्शिनः' इति । न चैतावता परमेश्वरस्य तदुपाधिगुणदोषसंबन्धलेशोऽस्ति; न हि गङ्गायां तटाके सुरायां मूत्रे वा प्रतिबिम्बमानस्यादित्यस्य तदुपाधिगुणदोषसंबन्ध इति सर्वमनवद्यम् । सोऽयमुभयतो नमस्काररूपः सप्तदशयजुरात्मकावान्तरमन्त्रसमुदायरूपचतुर्थानुवाक एको मन्त्रः; अस्य दुर्वासा ऋषिः, महाविराट्च्छन्दः, शंभुर्देवता । ध्यानम्— 'भस्मोद्धूलितसर्वाङ्गं जटामण्डलमण्डितम् । ध्यायेद्देवं वृषारूढं गणेश्वरयुतं हरम्' । राजयक्ष्मज्वरसंनिपातकुष्ठादिरोगपरिहारकोऽयं मन्त्रः । सार्धप्राजापत्यपूर्वकं सहस्रवारजपान्मन्त्रसिद्धिः ॥

इति चतुर्थोऽनुवाकः ॥



## पञ्चमोऽनुवाकः ॥

---

**नमो भवाय च रुद्राय च नमः शर्वाय च पशुपतये च ॥**

इत्थं चतुर्थे सर्वात्मकत्वेन भगवान्नमस्कृतः; इदानीं भगवदसाधारणधर्मरूपतन्महिमानुसंधानपूर्वकं तन्नमस्कारमारभते । एतदारभ्य 'द्रापे' इत्येतत्पर्यन्तमन्यतो नमस्काराः, सर्वत्र नमस्कारादिरेकैको मन्त्रः; यथा— 'नमो भवाय च रुद्राय च' इत्यादि । एवमन्येऽपि ज्ञेयाः । तत्र प्रथमं द्वाभ्यां मन्त्राभ्यां जगज्जन्मस्थितिसंहारबन्धमोक्षाख्यपञ्चकृत्यकारित्वरूपपरमेश्वरासाधारणमहिमानमनुसंदधानस्तं नमस्करोति— नमो भवाय चेति । भवत्यस्माज्जगदिति भवः, अनेन 'सर्वमिदं ब्रह्माविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते' इत्यादिश्रुतिप्रसिद्धं भगवतो जगज्जन्महेतुत्वं प्रदर्शितम् । रुदं संसारदुःखं द्रावयतीति रुद्रः, अनेन 'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति' 'रुद्रस्तारकं ब्रह्म व्याचष्टे' इति

श्रुतिप्रसिद्धं मोक्षहेतुत्वमुक्तम् । शृणाति हिनस्ति सर्वमिति शर्वः, अनेन 'तस्मा उपसंहर्त्रे महाग्रासाय नमः' इत्यादिश्रुतिप्रसिद्धं जगत्संहर्तृत्वमुक्तम् । पशुपतिशब्देन बन्धस्थितिहेतुत्वमुच्यते, पशुशब्देन संसारबन्धस्य पतिशब्देन तद्रक्षणस्य चोक्तेः ; तथा च 'संसारमोक्षस्थितिबन्धहेतुः' इति श्रुतिप्रसिद्धं जगत्स्थितिबन्धहेतुत्वमुक्तं भवतीत्याहत्य पञ्चकृत्यहेतुत्वेन भगवन्नमस्कारो मन्त्रद्वयार्थः । अत्र नमःशब्दस्य प्रत्येकं चतुर्थ्यन्तपदाभ्यामन्वयं द्रढयितुं समुच्चयार्थौ चकारौ फलितौ । तेन भवाय च नमः शर्वाय च नमः इत्यन्वयो भवति । एवमग्रेऽपि सर्वत्र द्रष्टव्यम् ॥

**नमो नीलग्रीवाय च शितिकण्ठाय च ॥**

अथ तृतीयः— नमो नीलग्रीवायेति । कालकूटग्रसनेन नीला ग्रीवा कण्ठो यस्य, स नीलग्रीवः, तद्ग्रसनात्पूर्वं शितिः धवलः कण्ठो यस्य, सः शितिकण्ठः । अनेन स्वतो धवलकण्ठे कालकूटप्रयुक्तं नैल्यं दोषमविगणय्य जगदेकरक्षणाय विषं कबलितवतो भगवतः सर्वलोकदयालुत्वम् 'अर्हन्निदं दयसे विश्वम्' इत्यादिश्रुतिप्रसिद्धं प्रदर्शितम् ॥

**नमः कपर्दिने च व्युप्तकेशाय च ॥**

अथ चतुर्थः— नमः कपर्दिन इति । कपर्दः परमेश्वरजटाकलापः, तद्वान् कपर्दी, अनेन 'दक्षं सयज्ञं जहि त्वं भटानां त्वमग्रणी रुद्रजटांशको मे' इति भागवतादिप्रसिद्धः भगवज्जटांशवीरभद्रमहिमा स्मर्यते । तेन च 'देवा वै यज्ञाद्रुद्रमन्तरायन् स यज्ञमविध्यत्' इत्यादिश्रुतिप्रसिद्धदक्षाध्वरध्वंसमहिमा दर्शितः । व्युप्ताः मुण्डिताः केशाः यस्य, सः व्युप्तकेशः, परमहंसपरिव्राजकः; 'अथ परिव्राडेकशाटी शिष्यपरिवृतो मुण्डोदरपात्री' 'ज्ञानशिखिनः ज्ञानयज्ञोपवीतिनः' इत्यादिश्रुतेः; तेन दत्तात्रेयदुर्वासःप्रभृतयः जाबालोपनिषदादिप्रसिद्धाः, कलियुगे च 'चतुर्भिः सहितः शिष्यैः शंकरोऽवतरिष्यति' 'शंकरः सवितानन:' इत्यादिपुराणप्रसिद्धपरमेश्वरावतारभावाः शंकराचार्यस्वामिनः, तद्रूपायेत्यर्थः । अनेन 'ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिः' इति श्रुतिप्रसिद्धं ब्रह्मविद्यासंप्रदायप्रवर्तकत्वमुक्तम् ॥

**नमः सहस्राक्षाय च शतधन्वने च ॥**

अथ पञ्चमः—नमः सहस्राक्षायेति । सहस्रम् अनन्तानि अक्षीणि यस्य, सः सहस्राक्षः, अनेन 'यः सर्वज्ञः' इत्यादिश्रुतिप्रसिद्धः सर्वज्ञत्वमहिमा दर्शितः । शतम् अनन्तानि धन्वानि धनूंषि वेदप्रणवमेर्वादिरूपाणि यस्य, सः शत-

धन्वा, 'स तथोक्तस्तथेत्युक्त्वा विष्णुं कृत्वा शरोत्तमम् । शल्यमग्निं तथा कृत्वा धनुर्मेरुमकारयत् ॥ कृत्वा च धनुरोंकारं सावित्रीं ज्यां महेश्वरः' इत्यादिभारतोक्तवेदप्रणवमेरुपिनाकाद्यनेकधनुर्युक्तायेत्यर्थः । अनेन 'तेषामसुराणां तिस्रः पुर आसन्' इति श्रुतिप्रसिद्धत्रिपुरसंहारमहिमा दर्शितः ॥

**नमो गिरिशाय च शिपिविष्टाय च**
**नमो मीढुष्टमाय चेषुमते च ॥**

अथ द्वाभ्यां त्रिमूर्त्यात्मकत्वम्, विश्वाधिकत्वं च दर्शयति — **नमो गिरिशायेति** । गिरिः कैलासः, सोऽस्यास्तीति **गिरिशः**, लोमादित्वान्मत्वर्थीयः शः, तद्रूपाय इत्यर्थः । **शिपिविष्टः** विष्णुः, 'विष्णुः शिपिविष्टः' इति श्रुतेः; विष्णुरूपायेत्यर्थः । **मीढुष्टमः** अतिशयेन वीर्यसेचकः जगत्स्रष्टा हिरण्यगर्भः, तद्रूपायेत्यर्थः । अनेन 'स ब्रह्मा स हरिः सेन्द्रः सोऽक्षरः परमः स्वराट्' इत्यादिश्रुतिप्रसिद्धत्रिमूर्त्यात्मकत्वमुक्तं भवति । प्रशस्तः इषुरस्यास्तीति **इषुमान्**, प्रशंसायां मतुप्; प्राशस्त्यं च इषोः 'स इषुँ॒ समस्कुर्वताग्निमनीकँ॒ सोमँ॒ शल्यं विष्णुं तेजनम्' इत्यादिश्रुत्युक्तं द्रष्टव्यम् । तेन च सर्वदेवानामपि त्रिपुरसंहारीयं भ-

गवत्परिकरत्वमनुस्मार्यते । तेन च 'यो देवानां प्रभवश्चोद्भवश्च' 'विश्वाधिको रुद्रो महर्षिः' 'अङ्गान्यन्या देवताः' इत्यादिश्रुतिप्रसिद्धं विश्वाधिकत्वं प्रदर्शितम् ॥

## नमो ह्रस्वाय च वामनाय च ॥

अथाष्टमः— नमो ह्रस्वायेति । शरीरे लघुप्रमाणो ह्रस्वः, अनेन 'तत्रापि दह्रं गगनं विशोकः' इत्यादिश्रुतिप्रसिद्धं दहरविद्योपास्यत्वं प्रदर्शितम् । संकुचितपादाद्यवयवो वामनः महागणपतिः, तद्रूपायेत्यर्थः । महागणपतेः साक्षात्परमेश्वरावतारत्वस्य मन्त्रशास्त्रपुराणादिप्रसिद्धेः । अनेन 'गणानां त्वा गणपतिꣳ हवामहे' इति श्रुतिप्रसिद्धो महिमा दर्शितः ॥

## नमो बृहते च वर्षीयसे च ॥

अथ नवमः— नमो बृहत इति । देशकालवस्तुकृतत्रिविधपरिच्छेदराहित्यं बृहत्त्वमिति ब्रह्ममीमांसायां व्यवस्थापितम्; बृहते परब्रह्मण इत्यर्थः । 'अथ कस्मादुच्यते परं ब्रह्मेति यस्माद्बृहति बृंहयति तस्मादुच्यते परं ब्रह्म' इति अथर्वशिरःश्रुतेः । अनेन 'ऋतं सत्यं परं ब्रह्म' 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिश्रुत्युक्तं परब्रह्मत्वं दर्शितं भवति ।

गुणैः समृद्धो वर्षीयान्, 'अनेन सत्यकामः सत्यसंकल्पः' 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इत्यादिश्रुत्युक्तदिव्यगुणमहिमा प्रदर्शितः ॥

## नमो वृद्धाय च संवृध्वने च ॥

अथ दशमः— नमो वृद्धायेति । सर्वापेक्षया वयोऽधिको वृद्धः सर्वैः स्वयं पूज्यः, न तु स्वस्य कश्चित्पूज्यो वन्द्यश्चास्तीत्यर्थः । अत एव खलु पुराणे श्रूयते— 'यस्यास्ति शक्तिः स तु वन्दितव्यः स कः करोत्वञ्जुलिकां पुरो मे । कः पूजितः स्याच्छशिशेखरेण नाराधितो भूतपतिस्तु वा कैः' इति । अनेन 'यस्मै नमस्तच्छिरोधर्म' इति श्रुतिप्रसिद्धं सर्वनमस्कारविषयत्वमुक्तं भवति । यद्यपि 'यस्मै नमस्तच्छिरः' इति सामान्येन श्रूयते, तथापि 'त्वं भूतानां श्रेष्ठोऽसि' इति परमेश्वरं प्रस्तुत्य 'सर्वे ते नमः' इत्युपसंहारे सर्वस्यापि नमस्कारस्य तदीयत्वोक्त्या 'यस्मै नमः' इत्युपक्रमेऽपि नमस्कारविषयत्वेन निर्दिष्टः परमेश्वर एवेति निश्चीयते ; तस्यैव निजचिच्छक्तिरूपशिंशुमाराद्याधारत्वेन प्रधानतया तच्छिरोरूपप्रधानावयवत्वेन निरूपणौचित्यात् देवतान्तराणां तदाकृतिं प्रति मूर्धहनुहृदयमध्यचरणपुच्छरूपत्वेन स्वस्वनामभिः पृथङ्निर्दिष्टत्वादित्यन्यत्र विस्तरः । स-

न्यक् असाधारण्येन स्तुतिनमस्कारैर्वर्धितः संवृध्वा, अनेन 'मा त्वा रुद्र चुक्रुधामानमोभिर्मासुष्टुतीवृषभमासहूती उन्नो-विरा॰ऽअर्पय भेषजेभिः' 'भिषक्तमं त्वा भिषजां शृणोमि' 'दुष्टुत्या सदृशस्तुत्या समानाह्वानकर्मणा । न वयं चुक्रुधाम त्वां सर्वदेवनमस्कृत' इति श्रुतिपुराणसिद्धमनितरदेवतासा-धारणस्तुतिनमस्कारैकविषयत्वं दर्शितं भवति ॥

नमो अग्रियाय च प्रथमाय च ॥

अथैकादशः— नमो अग्रियायेति । अग्रे जगदुत्प-त्तेः पूर्वमवस्थितः अग्रियः, इदमग्रियत्वं हिरण्यगर्भस्याप्य-स्ति, 'हिरण्यगर्भः समवर्तताग्रे' इति श्रुतेः; अतो वि-शिनष्टि— प्रथमायेति । हिरण्यगर्भादपि प्रथमः, तस्यापि कारणभूत इत्यर्थः । 'हिरण्यगर्भं जनयामास पूर्वम्' इति हि श्वेताश्वतरश्रुतिः । अनेन 'यदातमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः' इत्यादिश्रुतिप्रसिद्धं जगत्का-रणत्वं दर्शितम् । यद्यपि 'नमो भवाय' इत्यनेनैव तदुक्तम्, तथापि जगदादिहिरण्यगर्भजनकत्वेन तदेवात्रोपपाद्यते ॥

नम आशवे चाजिराय च ॥

अथ द्वादशः— नम आशव इति । अश्नोति व्याप्नो-

वीति आशुः, 'अशू व्याप्तौ' इति धातोराङ्पूर्वादौणादिक उप्रत्ययः; जगद्व्यापिन इत्यर्थः । तत्र हेतुः— अजिरायेति । गमनकुशलायेत्यर्थः । अनेन 'यो रुद्रो अग्नौ' इत्यादिश्रुतिप्रसिद्धं निखिलजगद्व्यापित्वमुक्तम् ॥

**नमः शीघ्रियाय च शीभ्याय च नम ऊर्म्याय चावस्वन्याय च नमः स्रोतस्याय च द्वीप्याय च ॥**

अथ त्रयोदशचतुर्दशपञ्चदशाः— **नमः शीघ्रियाय-चेति ।** शीघ्रगास्वप्सु भवः **शीघ्रियः,** तदन्तर्यामीति यावत् । शीभे उदकप्रवाहे भवः **शीभ्यः,** ऊर्मिषु तरङ्गेषु भवः **ऊर्म्यः,** अवस्वने ध्वनिरहिते जले भवः **अवस्वन्यः,** स्रोतसि प्रवाहे भवः **स्रोतस्यः,** शीभस्रोतसोर्महत्त्वाल्पत्वाभ्यां भेदः; द्वीपे भवः **द्वीप्यः;** यद्यपि 'नमो नाद्याय च वैशन्ताय च' 'नमः सिकत्याय च प्रवाह्याय च' 'नम ऊर्म्याय च सूर्म्याय च' इत्यादिना शीघ्रशीभोर्म्यादिरूपविविधजलान्तर्यामित्वमन्तर्यामिप्रकरणे वक्ष्यते, तथापि 'आपो वा इदꣳ सर्वम्' इत्यादिश्रुतिप्रसिद्धः सर्वोऽप्यपां महिमा तदन्तर्यामिणः परमेश्वरस्यैवेति दर्शयितुमग्रे वक्ष्यमाणमेव जलान्तर्या-

मित्वमत्रानूद्यते । श्रूयते हि— विचित्रशक्तेः परमेश्वरस्य एका शक्तिरपां महिमानं निर्वहतीति; यथा— 'अपामेका महिमानं बिभर्ति सूर्यस्यैका' इति । द्वीपशब्दोऽपि जलान्तर्यामित्वपर एव, द्विधाभूता आपो यस्मिन्देश इत्यर्थे 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' इत्यप्छब्दाकारस्य ईकारे सवर्णदीर्घे 'ऋक्पूरब्धूःपथामानक्षे' इत्यकारे च समासान्ते सति द्वीपशब्दस्य निष्पन्नत्वात् । यद्वा, द्वीपशब्देन जम्बूप्लक्षादिसप्तद्वीपवाचिना सर्वमपि जगदुपलक्ष्यते, तथा च सर्वेषु द्वीपेषु सर्वत्र लोकेऽपि विद्यमानः सर्वोऽप्यतिशयस्तदन्तर्यामिणः परमेश्वरस्यैवेति तदर्थो द्रष्टव्यः ॥

इति पञ्चमोऽनुवाकः ॥



## षष्ठोऽनुवाकः ॥

---

नमो ज्येष्ठाय च कनिष्ठाय च नमः पूर्वजाय चापरजाय च नमो मध्यमाय चापगल्भाय च नमो जघन्याय च बुध्नियाय च नमः सोभ्याय च प्रतिसर्याय च नमो याम्याय च क्षेम्याय च नम उर्वर्याय च खल्याय च नमः श्लोक्याय चावसान्याय च नमो वन्याय च कक्ष्याय च नमः श्रवाय च प्रतिश्रवाय च नम आशुषेणाय चाशुरथाय च नमः शूराय चावभिन्दते च नमो वर्मिणे च वरूथिने च नमो बिल्मिने च कवचिने च नमः श्रुताय च श्रुतसेनाय च ॥

पञ्चमे विविधमहिमोपेतत्वेन भगवान्नमस्कृतः, षष्ठे तु सर्वात्मकत्वसर्वान्तर्यामित्वाभ्यां नमस्क्रियते— नमो ज्ये-

ष्ठायेति । वयोविद्याश्रमादिभिरधिको ज्येष्ठः, तैर्न्यूनः कनिष्ठः, तदुभयरूपायेत्यर्थः । पूर्वभावि मृदादि कारणं पूर्वजम्, पश्चाद्भावि घटादिकं कार्यम् अपरजम्, तदात्मकायेत्यर्थः । मध्यमः युवा, अपगल्भस्तु अप्ररूढेन्द्रियो बालः, तदुभयरूपायेत्यर्थः । नमो जघन्यायेत्यादयः अन्तर्यामित्वप्रतिपादकाः; जघने पश्चाद्भागे भवः जघन्यः, बुध्ने मूले भवः बुध्न्यः, उभाभ्यां पुण्यपापाभ्यां सह वर्तमानः सोभः मनुष्यलोकः,'पुण्येन पुण्यं लोकं नयति पापेन पापमुभाभ्यामेव मनुष्यलोकम्' इति श्रुतेः; तत्र भवः सोभ्यः, प्रतिसरति गच्छतीति प्रतिसरः जङ्गमप्रपञ्चः, तत्र भवः प्रतिसर्यः, यमलोके भवः याम्यः, क्षेमे स्वर्गलोके भवः क्षेम्यः, उर्वरा सर्वसस्याढ्या भूमिः, तत्र भवः उर्वर्यः, खलः धान्यविवेचनदेशः, तत्र भवः खल्यः, श्लोकेषु वेदमन्त्रेषु भवः श्लोक्यः, अवसानं वेदान्तः, तत्र भवः अवसान्यः, वने भवः वन्यः, कक्षेषु गुल्मेषु भवः कक्ष्यः । अथ सार्वात्म्येन नमस्करोति नमः श्रवायेत्यादिना । श्रूयते इति श्रवः शब्दः, प्रतिश्रवस्तु प्रतिध्वनिः, आशुः शीघ्रगामिनी सेना यस्य, स आशुषेणः; एवम् आशुरथः, शूरः शौर्यवान्, अवभिन्दन् भेत्ता ब्रह्मद्विषां मूर्ध्नो भिनत्तीति, वर्मी कञ्चु-

कोपेतः, वरूथः सारथेः गुप्तिस्थानम्, बिल्मं बिलोपेतं युद्धे शिरोरक्षकम्, तदस्यास्तीति बिल्मी, कवचः शरीररक्षकं कञ्चुकम्, तद्वान् कवची, श्रुतः प्रसिद्धः, श्रुतसेनः प्रसिद्धसेनः; देवासुरमनुष्यादिषु यो यस्तिष्ठति— आशुषेणः, आशुरथः, शूरः, अवभिन्दन्, वर्मी, वरूथी, बिल्मी, कवची, श्रुतः, श्रुतसेनो वा, तद्रूपायेत्यर्थः । अस्य भगवानृषिः, स एव देवता, क्रमेण महाविराण्महापङ्क्तिच्छन्दः । ध्यानम्—गौरीकराम्बुजन्यस्तं स्वर्णशैलशरासनम् । इक्षुहस्तं नरारूढं नरनारीतनुं स्मरेत् ॥ शत्रुविजयचिरायुष्यराज्याभिवृद्धिसुपुत्रावाप्तिफलप्रदोऽयं मन्त्रः । त्रिरात्रचरुभोजननिरन्तरैकादशदिनजपान्मन्त्रसिद्धिः ॥

इति षष्ठोऽनुवाकः ॥



## सप्तमोऽनुवाकः ॥

नमो दुन्दुभ्याय चाहनन्याय च नमो धृष्णवे च प्रमृशाय च नमो दूताय च प्रहिताय च नमो निषङ्गिणे चेषुधिमते च नमस्तीक्ष्णेषवे चायुधिने च नमः स्वायुधाय च सुधन्वने च नमः स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च नमः सूद्याय च सरस्याय च नमो नाद्याय च वैशन्ताय च नमः कूप्याय चावट्याय च नमो वर्ष्याय चावर्ष्याय च नमो मेघ्याय च विद्युत्याय च नमः ईध्रियाय चातप्याय च नमो वात्याय च रेष्मियाय च नमो वास्तव्याय च वास्तुपाय च ॥

षष्ठ इव सप्तमेऽपि सर्वान्तर्यामित्वसर्वात्मत्वाभ्यां नमस्क्रियते— **नमो दुन्दुभ्यायेति** । दुन्दुभौ भेर्यां भवः दुन्दुभ्यः, आहन्यन्ते ताड्यतेऽनेनेति आहननः दुन्दुभ्याघातार्थो दण्डः, तत्र भवः आहनन्यः, नमो धृष्णवे चेत्यादयः सर्वात्मत्वेन भगवतो नमस्काराः । लोके यो धृष्णुः प्रमृशन्दूतादिः तद्रूपायेत्यर्थः । धृष्णुः युद्धे पलायनरहितः, प्रमृशः परसैन्यवृत्तान्तपरामर्शकः, दूतः तद्वृत्तान्तज्ञानकुशलः, प्रहितः स्वामिप्रेरितः पुरुषः, निषङ्गीषुधिमन्तौ व्याख्यातौ । तीक्ष्णा इषवो यस्य सः तीक्ष्णेषुः, बहून्यायुधान्यस्येति आयुधी, शोभनम् आयुधं यस्येति स्वायुधः, शोभनं धनुर्यस्येति सुधन्वा, नमः स्रुत्यायेत्यादिभिरन्तर्यामितोच्यते— स्रुतिः पादसंचारमात्रयोग्यः क्षुद्रमार्गः, तत्र भवः स्रुत्यः रथादिसंचारयोग्यः प्रौढमार्गः पन्थाः, तत्र भवः पथ्यः, कुत्सितमटति जलमत्रेति काटः अल्पजलप्रदेशः, तत्र भवः काट्यः, यत्र जलं न्यग्भावेन पतति स देशो नीपः, तत्र भवो नीप्यः, सूदः कर्दमः, तत्र भवः सूद्यः, सरः प्रसिद्धम्, नद्यां भवः नाद्यः, अल्पसरो वेशन्तः, तत्र भवः वैशन्तः, कूपे भवः कूप्यः, अवटे गर्ते भवः अवट्यः, वर्षे भवः वर्ष्यः, वर्षाभावो अवर्षः, तत्र भवः अवर्ष्यः, वर्ष-

तदभावयोः प्रेरक इत्यर्थः । मेघेषु भवः मेघ्यः, विद्युति भवः विद्युत्यः, ईध्रं निर्मलत्वेन दीप्यमानं शरदभ्रम्, तत्र भवः ईध्र्यः, आतपे भवः आतप्यः, वाते भवः वात्यः, रिष्यन्ति नश्यन्ति भूतान्यत्रेति रेष्मः प्रलयकालः, तत्र भवः रेष्मियः, वास्तवं गवादिकं वस्तु, तत्र भवः वास्तव्यः, गृहनिर्माणार्था भूमिः वास्तु, तत्पालकत्वेन तत्र तिष्ठन् वास्तुपः, सोऽयमन्यतो नमस्काररूपः षोडशयजुरात्मकावान्तरमन्त्रसमुदायरूपः सप्तमोऽनुवाक एको मन्त्रः । अस्य रोमश ऋषिः, महानुष्टुप्छन्दः, रुद्रो देवता; 'जटाभिर्लम्बमानाभिर्नृत्यन्तमभयप्रदम् । देवं शुचिस्मितं ध्यायेद्व्याघ्रचर्मपरिष्कृतम्' । मेधायुष्यारोग्यलक्ष्मीपुत्रविद्यामोक्षफलप्रदोऽयं मन्त्रः । एकोपवासपूर्वकशततजपान्मन्त्रसिद्धिः । इति सप्तमः ॥

नमः सोमाय च रुद्राय च ॥

सप्तमे सर्वात्मकत्वसर्वान्तर्यामित्वाभ्यां भगवान्नमस्कृतः; अष्टमे तु अखिललोकोपास्यत्वहेतुभिरसाधारणधर्मैरन्तर्यामितया च भगवान् नमस्क्रियते सप्तदशभिः । तत्र तावत्परमेश्वरस्यैव मोक्षप्रदत्वात्स एव मुमुक्षुभिः सर्वैरुपास्य इति दर्शयितुं प्रथमो मन्त्रः— नमः सोमायेति । अत्र रुद्राय

नम इति प्रथममन्वयः; रुतं संसारदुःखं द्रावयतीति रुद्रः । श्रूयते हि श्वेताश्वतरोपनिषदि— 'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति' इति परमेश्वरं विना दुःखनिवृत्तेर्गगनवेष्टनवदत्यन्तासंभावितत्वम् । एतदेवोपपादयितुं नमः सोमायेति विशेषितम्; उमया सहितः सोमः, उमेति प्रणववर्णव्यत्यासरूपः 'पराशक्तिः प्रणवः' इति लैङ्गादिषु प्रतिपादितं दिव्याभिधानम्, तेन परब्रह्मविद्याधिदेवता पारमेश्वरी चिच्छक्तिरुच्यते; तथा चाविद्यकसंसारनिवृत्तेर्ब्रह्मविद्यासाध्यत्वात् तादृशब्रह्मविद्याधिदेवतालंकृतः परमेश्वर एव संसारदुःखद्रावक इत्युपपादितं भवति । ब्रह्मविद्याधिदेवतात्वं च पराशक्तेरुमायाः वेदान्तेषु प्रसिद्धम्; तथाहि श्वेताश्वतरोपनिषदि —'ब्रह्मवादिनो वदन्ति किं कारणं ब्रह्म कुतः स्म जाताः' इति प्रस्तुत्य, 'ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम्' इत्यादिना पुनर्ब्रह्मवादिनां महर्षीणामुमानुग्रहादेव ब्रह्मत्वनिश्चयो जात इति प्रतिपादितम् । उपबृंहितं च शैवपुराणे 'मुमुक्षया पुरा केचिन्मुनयो ब्रह्मवादिनः । संशयाविष्टमनसो विमृशन्ति यथातथम् । किं कारणं कुतो जाता जीवामः केन वा वयम्' इति प्रस्तुत्योक्तम्—'ते ध्यानयोगा-

नुगताः प्रापश्यञ्शक्तिमैश्वरीम् । पाशविच्छेदिकां साक्षान्निगू-
ढां स्वगुणैर्भृशम् ॥ तया विच्छिन्नपाशास्ते सर्वकारणकारणम् ।
शक्तिमन्तं महादेवमपश्यञ्ज्ञानचक्षुषा' इति । कूर्मपुराणेऽपि
'समेत्य ते महात्मानो मुनयो ब्रह्मवादिनः । वितेनिरे बहू-
न्वादान्' इति प्रस्तुत्य 'इत्येवं मन्यमानानां ध्यानयोगावल-
म्बिनाम् । आविरासीन्महादेवी गौरी गिरिवरात्मजा ॥ नि-
रीक्षितास्ते परमेशपत्न्या तदन्तरे देवमशेषहेतुम् । पश्यन्ति
शंभुं कविमीशितारं बृहन्तमीशं पुरुषं पुराणम्' इति । तथा
तलवकारिणामुपनिषद्यपि 'स तस्मिन्नाकाशे स्त्रियमाजगाम
बहुशोभमानामुमां हैमवतीं तां होवाच किमेतद्यक्षमिति ब्रह्मेति
होवाच ब्रह्मणो वा एतद्विजये महीयध्वम्' इत्यादिना पुरा
शक्रादीनामुमानुग्रहादेव परब्रह्मावबोधो जात इत्युपाख्या-
यते । कैवल्योपनिषदि च 'उमासहायं परमेश्वरं प्रभुं त्रि-
लोचनं नीलकण्ठं प्रशान्तम् । ध्यात्वा मुनिर्गच्छति भूतयोनिं
समस्तसाक्षिं तमसः परस्तात्' इत्युमासाहित्येनैव परमे-
श्वरस्य ध्यानं मोक्षप्रदत्वेनोच्यमानमुमायाः परब्रह्मवि-
द्याधिदेवतात्वं गमयति, उक्तश्रुत्या एकार्थत्वात्; 'पार्वती
परमा देवी ब्रह्मविद्याप्रदायिनी । तस्मात्सह तया शक्त्या हृदि
पश्यन्ति ये शिवम् । तेषां शाश्वतिकी सिद्धिर्नेतरेषामिति

श्रुतिः' इत्यादितदुपबृंहणानुरोधाच्च । न केवलं मोक्षप्रदत्वमेवोमासाहित्यप्रयुक्तं भगवतः, किं तु सर्वज्ञत्वसर्वेश्वरत्वसर्वान्तर्यामित्वसर्वकारणत्वादिरूपः सर्वोऽपि महिमा परशक्तिविलास एवेति 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इत्यादिश्रुतयः प्रथयन्ति । प्रपञ्चयन्ति चेतिहासपुराणानि, प्रवदन्ति चाभियुक्ताः—'शक्तिः शरीरमधिदैवतमन्तरात्मा ज्ञानं क्रिया करणमासनजालमिच्छा । ऐश्वर्यमायतनमावरणानि च त्वं किं किं न यद्भवासि बालशशाङ्कमौलेः' इति, 'न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि' इति च । अत एव खलु तादृशमहिमप्रयुक्तायामुमायामादरातिशयादेव तैत्तिरीयोपनिषदि 'अम्बिकापतये' इत्युक्त्वापि पुनः 'उमापतये' इति तत्पतित्वेन भगवान्नमस्क्रियत इत्यास्तां तावत् ॥

## नमस्ताम्राय चारुणाय च ॥

अथ आदित्यरूपेण सर्वेषामप्यनायासेन प्रत्यक्षीभूय सकलश्रेयःप्रदत्वादपि परमेश्वर एवोपास्य इति द्वितीयो मन्त्रः—**नमस्ताम्रायेति** । उदयकाले अत्यन्तरक्तवर्णः ताम्रः, तदनन्तरमीषद्रक्तः अरुणः, चकारादूर्ध्वं बभ्रुवर्णः । एवं-

भूताय, अष्टमूर्तेर्भगवतः सूर्यात्मको मूर्तिविशेषः तस्मै नम इत्यर्थः । लोके हि उपासकैर्महता नियमेन बहुकालमुपासने कृते तदनन्तरं देवताविर्भवति; आदित्यस्तु भगवानयत्नतः स्वयमेवाखिलप्राणिजातस्य पुरतोऽनुदिनमपि ताम्रारुणादिरूपेणाविर्भवति । उक्तं हि तदेतत्— 'उतैनं गोपा अदृशन्नदृशन्नुदहार्यः' इति । एवमाविर्भवतोऽस्याभिमुख्यसंपादनार्थमपि न यत्नो भवति, उदयन्नेव हि भगवान्प्रतिपुरुषमभिमुख एव उदेति; श्रूयते च— 'तस्मात्सर्व एव मन्यते मां प्रत्युदगात्' इति । इत्थं स्वयमेवाविर्भूय वरदानाभिमुखेऽवस्थिते परमेश्वरोऽयमिति बुद्धिमात्रं वितन्वन्नखिलमपि श्रेयो लभते । तथा च श्रुतिः— 'उद्यन्तमस्तं यन्तमादित्यमभिध्यायन्कुर्वन्ब्राह्मणो विद्वान्सकलं भद्रमश्नुतेऽसावादित्यो ब्रह्म' इति । अतोऽनायासेनैवाखिलपुरुषार्थप्रदः परमेश्वर एव उपास्य इति भावः । 'उद्यन्तम्' इति श्रुतौ उदयकालावच्छिन्ने ताम्र एवाभिध्यानं विहितम्, अत्र तु सर्वस्यापि लोकस्य उदयकाले नियमो न संभवति, प्रमादालस्यभूयिष्ठत्वात्; तदनुग्रहार्थमुदयकालध्यानाशक्तानां तदुत्तरकाले अरुणवर्णे, तत्राप्यशक्तानां तदूर्ध्वकाले बभ्रुवर्णे सवितरि ब्रह्माभिध्यानं विधातुम् 'नमस्ता-

म्राय चारुणाय च' इत्युक्तम् । अहो परमकारुणिकता रुद्रोपनिषदः ॥

**नमः शंगाय च पशुपतये च ॥**

अथ खलु सुखप्रदत्वादपि परमेश्वर एव सर्वसुखार्थिभिरुपास्य इति दर्शयितुं तृतीयः— **नमः शंगायेति** । शं सुखं गमयति प्रापयतीति शंगः, तत्र हेतुः— **पशुपतय इति** । पशूनां ब्रह्मादिस्थावरान्तानां पतिः पालकः । तथा च भगवानेव लोकजालस्य सुखहेतुः, पालनीयसुखस्य पालकाधीनत्वादिति भावः ॥

**नम उग्राय च भीमाय च ॥**

अथ विश्वाधिकत्वात्परमेश्वर एव विश्वोपास्य इति दर्शयितुं चतुर्थः— **नम उग्रायेति** । उग्रः श्रेष्ठः, उत्पूर्वाद्गमेः उद्गच्छतीत्यस्मिन्नर्थे 'ऋज्रेन्द्राऽग्र...' इत्युणादिसूत्रेण रन्प्रत्ययः । अत एव 'उग्रोऽस्युग्रोऽहं सजातेषु भूयासम्' इति मन्त्रे ज्ञातिश्रैष्ठ्यप्रशंसाविषये स्वस्मिन्नुग्रशब्दः प्रयुक्तः । तत्र श्रैष्ठ्यसमर्पकस्य सजातपदस्येव तादृशस्य कस्यचिदभावात्संकोचाभावन्यायेन सर्वश्रेष्ठत्वरूपं विश्वाधिकत्वं सिध्यति । तत्र हेतुः— **भीमायेति** । भीमः भयंकरः 'भीषा-

स्माद्वातः पवते' इति श्रुतेः । तथा च महानुभावादिन्द्राग्न्यादीन्प्रत्यपि भयंकरत्वेन तन्नियन्तुर्भगवतः सर्वोत्तमत्वमिति भावः ॥

## नमो अग्रेवधाय च दूरेवधाय च ॥

अथ सकलजयहेतुत्वात्सर्वैरेव तदर्थिभिर्भगवानेव सेव्य इति दर्शयितुं पञ्चमः— नमो अग्रेवधायेति । युद्धरङ्गं प्रविष्टस्य स्वभक्तस्य अग्रे स्थित्वा तदीयशत्रूणां वधं कुर्वन् अग्रेवधः, युद्धारम्भात् पूर्वमेव दूरास्थितानामपि स्वभक्तविरोधिनां बलतेजोभङ्गं कुर्वन् दूरेवधः; तत्र अग्रेवधत्वं तावद्द्रोणपर्वणि अर्जुनेनोक्तम्— 'संग्रामे शात्रवानीकं शरौघैर्विमृदन्नहम् । अग्रतो लक्षये यान्तं पुरुषं पावकप्रभम् ॥ ज्वलन्तं शूलमुद्यम्य यां दिशं प्रतिपद्यते । तस्यां दिशि विशीर्यन्ते शत्रवो मे महामते ॥ ततो दग्धानरीन्सर्वान्पृष्ठतोऽनुदहाम्यहम् । तेन भग्नानरिगणान्मद्भग्नान्मन्यते जनः' इति । आश्वमेधिके चायमर्थोऽनूदितः— 'ततः प्रभातां रजनीमर्जुनस्याग्रतः प्रभुः । जघान सैन्यं शूलेन प्रत्यक्षं सव्यसाचिनः ॥ कस्तां सेनां महाराज मनसापि प्रधर्षयेत् । द्रोणकर्णकृपैर्गुप्तां महेष्वासैः प्रहारिभिः । ऋते देवान्महेष्वासाद्बहुरूपान्महेश्वरात्' इति । दूरेवधत्वं तु मोक्षधर्मे

अर्जुनं प्रति कृष्णेनोक्तम्; तत्र हि— 'यस्तु ते ह्यग्रतो याति युद्धे संप्रत्युपस्थिते । तं विद्धि रुद्रं कौन्तेय' इति प्रस्तुत्योक्तम्— 'निहतान्तेन वै पूर्वं हतवानसि वै रिपून् । अप्रमेयप्रभावं तं देवदेवमुमापतिम् ॥ भजस्व प्रयतो नित्यं विश्वेशं हरमव्ययम्' इति । गीतायामप्युक्तम् 'मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यासाचिन्' इति । परमेश्वरावतारत्वेन श्रीकृष्णस्य तदभिन्नत्वात् 'मयैवैते निहताः' 'निहतांस्तेन वै पूर्वम्' इति वचनयोर्न विरोधः ॥

## नमो हन्त्रे च हनीयसे च ॥

अथ परमेश्वरानादरस्य महानर्थहेतुत्वात्सर्वैरपि तदुपासनं विधेयमिति दर्शयितुं षष्ठः— नमो हन्त्र इति । अहमेव सर्वोन्नत इति गर्वेण निजानादरकारिणां हन्ता हिंसकः, द्वेषनिन्दापूर्वकं तत्कारिणामतिशयेन हिंसको हनीयान् । तत्र हन्तृत्वस्योदाहरणं रावणः; स किल बलैश्वर्यगर्वेण परमेश्वरमनादृत्य कैलाससंचिचालयिषया भुजानधःप्रसारयन् भगवदङ्गुष्ठाग्रदरपरिस्पन्दनिपीडितकैलासदृढघट्टितनिजभुजव्यथया चिरमाक्रुश्य ततो दयया भगवतैव मुक्त इति रामायणादिषु प्रसिद्धम् । हनीयस्त्वस्योदाहरणं दक्षः; स किल

भगवद्दूषरूषितो यष्टुमारेभे । तं वीरभद्रोऽनुदुद्राव, ततो दक्षस्य शिरच्छेदः, यज्ञशालायाः दहनम्, कुण्डेषु मूत्रकरणम्, अग्नीनां विनाशनम्, यूपानुत्पाट्य तैरखिलदेवताप्रहारः, ऋत्विजां कशाघातः, भृगोः श्मश्रुलुञ्छनम्, पूष्णो दन्तभङ्गः, भगस्य नेत्रोत्पाटनम्; अहो महती हिंसा कृता । न हि तदा तेषां कश्चित्त्राता बभूव; अतो महानर्थंकरः परमेश्वरानादर इति तदुपासनमवश्यं कार्यमिति भावः ॥

## नमो वृक्षेभ्यो हरिकेशेभ्यः ॥

न केवलं विपक्षे बाधकभयादेव परमेश्वरस्योपास्यत्वम्, किंतु इह लोके पलाशबिल्वाश्वत्थादिरूपेण सकलयज्ञनिर्वाहकतया परत्र च कल्पकवृक्षरूपेण सकलस्वर्गभोगनिर्वाहकतया च तदर्थिभिः सर्वैरपि तदाश्रयणीयत्वमिति दर्शयितुं सप्तमः— **नमो वृक्षेभ्य इति ।** हरितवर्णाः पलाशरूपाः केशा येषां तेभ्यः वृक्षेभ्यो नमः । हरितकेशपदेन पलाशानां वृक्षत्वप्रयुक्त इव पर्णत्वप्रयुक्तोऽपि परमेश्वरविभूतिमहिमास्तीति दर्शितम् । अत एव 'ब्रह्म वै पर्णः यत्पर्णशाखया वत्सानपाकरोति ब्रह्मणे वैनानपाकरोति' इति पलाशवृक्षत्वप्रयुक्त इव 'तस्मात्त्रीणि त्रीणि पर्णस्य पलाशानि त्रिपदा गायत्री' इति पर्णत्वप्रयुक्तोऽपि तस्य महिमा श्रूयते । बिल्वस्यापि

'आदित्यो यतोऽजायत ततो बिल्व उदतिष्ठत्' इति बिल्व-वृक्षत्वप्रयुक्त इव पत्रप्रयुक्तमहिमा पुराणेषु श्रूयते । एवमन्यदप्युदाहार्यम् ॥

**नमस्ताराय ॥**

अथ स्वर्गोपकरणत्ववन्मोक्षोपकरणत्वादपि भगवत एवाश्रयणीयत्वं वक्तुमष्टमः— **नमस्तारायेति** । तारः प्रणवः, तद्रूपाय नमः । श्रूयते ह्यथर्वशिरसि— 'स ओंकारस्तारः' इति प्रस्तुत्य 'स एको रुद्रः स ईशानः' इति । तैत्तिरीयेऽपि 'ब्रह्मा शिवो मे अस्तु सदाशिवोम्' इति । प्रणवरूपत्वं च भगवतस्तत्प्रतिपाद्यत्वमेव, 'शिवो वा प्रणवो ह्येष प्रणवो वा शिवः स्मृतः । वाच्यवाचकयोर्भेदो नात्यन्तं विद्यते क्वचित्' इति शिवपुराणवचनात् । 'तस्य प्रकृतिलीनस्य यः परः स महेश्वरः' इति श्रुतेश्च ॥

**नमः शंभवे च मयोभवे च ॥**

अथ वैश्वानरद्वादशकपालेष्टिफले पूतत्वादीनामिव निरतिशयानन्दमहासमुद्रे परमात्मनि ऐहिकामुष्मिकसकलसुखानामपि शीकरतयान्तर्भावात्तदर्थिभिः सर्वैरपि तदाश्रयणमवश्यं कार्यमिति दर्शयितुं नवमः— **नमः शंभव इति** । शमि-

त्यैहिकं सुखम्, मय इत्यामुष्मिकं स्वर्गादिसुखम्, शं भवति प्रादुर्भवत्यस्मादिति **शंभुः**, एवं **मयोभूः**; तथा च श्रुतिः— 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति ॥

## नमः शंकराय च मयस्कराय च ॥

न केवलं तटाकान्तस्थितस्योदकस्येव परमेश्वरान्तास्थितस्य सुखस्य लोकोपजीव्यत्वमात्रेण भगवतस्तदुपासकता, किं तु ऐहिकामुष्मिकसुखदाने स्वतन्त्रकर्तृत्वेनापीति दर्शयितुं दशमः— **नमः शंकराय चेति** । यद्यपि 'नमः शंभवे' इत्यनेनेदं पुनरुक्तम्, तत्र साक्षात्कर्तृत्वम्, अत्र तु परंपरयेति भेदः ॥

## नमः शिवाय च शिवतराय च ॥

अथेदानीमखिलश्रेयःप्रदत्वेन परमेश्वरस्यैव जगदुपास्यत्वप्रदर्शकम् अशेषदोषजालकूलंकषं हरिब्रह्माद्युपासनीयम् एकादशमन्त्रराजमाह— **नमः शिवायेति** । शिवशब्दः 'तत्करोति' इति ण्यन्तात्पचाद्यचि निष्पन्नः शिवंकरत्ववाची; तथा अथर्वशिखाश्रुतिः— 'शिव एको ध्येयः शिवंकरः' इति । अत्र हि शिवशब्दव्याख्यानार्थं शिवंकरपदम् । 'सर्वैश्वर्यसंपन्नः सर्वेश्वरः' इत्यत्र सर्वेश्वरपदव्याख्यानार्थं सर्वै-

श्वर्यसंपन्न इति पदोपादानेन अत्रापि तथात्वावगमात् । 'समा भवन्ति मे सर्वे दानवाश्च सुराश्च ये । शिवोऽस्मि तेन भूतानां शिवत्वं तेन मे सुराः' इति भारतवचनाच्च । यत्तु भारते 'शिवमिच्छन्मनुष्याणां तस्माद्देवः शिवः स्मृतः' इति शिवशब्दस्य व्याख्यानम्, तदपि शिवंकरत्वार्थपर्यवसितमेव, इच्छैव संकल्पमात्रेण सकलजगत्स्रष्टुर्भगवतः करणम् । एवम् 'हिंसिधातोः सिंहशब्दो वशकान्तौ शिवः स्मृतः । अथवाशेषकल्याणगुणैकनिधिरीश्वरः ॥ शिव इत्युच्यते सद्भिः शिवतत्त्वार्थवेदिभिः' इत्यादीन्यन्यान्यपि पौराणिकवचनान्यथर्वशिखोक्तशिवंकरत्वपर्यवसितान्येव द्रष्टव्यानि । नन्विदं शिवंकरत्वमन्यथापि दृश्यते 'पावको अस्मभ्यं शिवो भव' इति; लोकेऽपि दृश्यते— पन्थानः सन्तु ते शिवाः इति । अतो विशिनष्टि— **शिवतराय चेति** । लोके वेदे च यावन्तः शिवंकरास्तदपेक्षयाप्यतिशयेन शिवंकरः शिवतरः । अत एव भगवानेवोपास्य इति भावः । तदेतदथर्वशिरसि स्पष्टमुक्तम् । तत्र हि–'किं तद्ध्यानं को वा ध्याता कश्च ध्येयः' इति प्रश्ने 'शिव एको ध्येयः शिवंकरः सर्वमन्यत्परित्यज्य' इति सर्वपरित्यागपूर्वकं शिवस्यैकस्यैव ध्येयत्वं शिवशब्दवाच्येन शिवंकरत्वेन उपपाद्य ततः सर्वापेक्षयातिशायिताशिवं-

करत्वेनाविष्कृतम् । सोऽयमखिलश्रुतिहारायमाणरुद्रोपनिषन्नायकमणिः महामन्त्रः । यदाहुः— 'विद्यासु श्रुतिरुत्कृष्टा रुद्रैकादशिनी श्रुतौ । तत्र पञ्चाक्षरी तस्यां शिव इत्यक्षरद्वयम्' इति । जीवरत्नमिति च शिवशब्दस्य आगमेषु व्यवहारः । सर्वाण्येव शिवपुराणवचनानि एतन्माहात्म्यप्रमाणत्वेनोदाहरणीयानीति संक्षेपः ॥

**नमस्तीर्थ्याय च कूल्याय च नमः पार्याय चावार्याय च नमः प्रतरणाय चोत्तरणाय च नम आतार्याय चालाद्याय च नमः शष्प्याय च फेन्याय च नमः सिकत्याय च प्रवाह्याय च ॥**

तदेवम् 'नमः सोमाय' इत्यादिभिरेतदन्तैर्मन्त्रैरखिलोपास्यत्वधर्महेतुविशिष्टतया भगवान्नमस्कृतः । अथान्तर्यामित्वेन च नमस्करोति नमस्तीर्थ्यायेत्यादिभिः— तीर्थेषु गङ्गादिषु भवः तीर्थ्यः, कूलेषु भवः कूल्यः, नद्यादीनां परं तीरं पारम्, तत्र भवः पार्यः, अर्वाक्तीरम् अवारम्, तत्र भवः अवार्यः, प्रकृष्टेन मार्गेण पापतरणहेतुः प्रतरणः, ततोऽप्युत्कृष्टेन ज्ञानमार्गेण अविद्यातरणहेतुः उत्तरणः इति

तादात्म्येन नमस्कारः । पुनरागमनं आतारः, तत्र भवः आतार्यः, अलं कर्मपूर्णं यथा भवति तथा कर्मफलमत्तीत्यलादः जीवः, तत्र भवः अलाद्यः, शष्पं बालतृणम्, तत्र भवः शष्प्यः, फेनेषु भवः फेन्यः, सिकतासु भवः सिकत्यः, प्रवाहेषु भवः प्रवाह्यः ॥

इति अष्टमोऽनुवाकः ॥



## नवमोऽनुवाकः ॥



नम इरिण्याय च प्रपथ्याय च नमः किꣳशिलाय च क्षयणाय च नमः कपर्दिने च पुलस्तये च नमो गोष्ठ्याय च गृह्याय च नमस्तल्प्याय च गेह्याय च नमः काट्याय च गह्वरेष्ठाय च नमो ह्रदय्याय च निवेष्प्याय च नमः पाꣳसव्याय च रजस्याय च नमः शुष्क्याय च हरित्याय च नमो लोप्याय चोलप्याय च नम ऊर्व्याय च सूर्म्याय च नमः पर्ण्याय च पर्णशद्याय च ॥

अष्टमे जगदुपास्यत्वहेतुभिरन्तर्यामितया भगवान्नमस्कृतः। नवमे पुनरन्तर्यामितया भगवान्नमस्क्रियते— नम इरिण्यायेति। इरिणम् ऊषरम्, तत्र भवः इरिण्यः, प्रपथः क्षुण्णमार्गः, तत्र भवः प्रपथ्यः, कुत्सिताः शिला यस्मिन् सः

किंशिलः, क्षयणः वासयोग्यो देशः, तदुभयरूपायेत्यर्थः । कपर्दी जटाजूटवान्, भक्तानां पुरतस्तिष्ठतीति पुलस्तिः, गवां स्थानं गोष्ठम्, तत्र भवः गोष्ठ्यः, गृहे भवः गृह्यः, तल्पेषु भवः तल्प्यः, गेहे प्रासादे भवः गेह्यः, कुत्सितमटति कण्टकलतादिपरिपूर्णतया दुष्प्रवेशत्वं प्राप्नोतीति काटः, तत्र भवः काट्यः, गह्वरे विषमे गिरिगुहादौ तिष्ठतीति गह्वरेष्ठः, ह्रदेषु अगाधजलेषु भवः ह्रद्य्यः, निवेष्पं नीहारजलम्, तत्र भवः निवेष्प्यः, पांसुषु परमाणुषु भवः पांसव्यः, रजसि स्पष्टायां धूल्यां भवः रजस्यः, शुष्केषु काष्ठेषु भवः शुष्क्यः, हरितेषु आर्द्रेषु भवः हरित्यः, लुप्यते तृणादिकमस्मिन्निति लोपः कठिनप्रदेशः, तत्र भवो लोप्यः, उलपो बल्बजतृणादिः, तत्र भवः उलप्यः, उर्व्यां पृथिव्यां भवः ऊर्व्यः, दीर्घश्छान्दसः । शोभना ऊर्मयो यासां नदीनां ताः सूर्मयः, तत्र भवः सूर्म्यः, पर्णेषु भवः पर्ण्यः, शुष्कपर्णसंघातः पर्णशदः तत्र भवः पर्णशद्यः ॥

**नमोऽपगुरमाणाय चाभिघ्नते च नम आख्खिदते च प्रख्खिदते च ।**

अथ नमोऽपगुरमाणायेति द्वाभ्यां जगन्निग्राहका भगवदंशा रुद्रा नमस्क्रियन्ते— तत्र निग्राह्येषु पापिष्ठेषु उद्य-

तायुधः अपगुरमाणः, तान्प्रहरन् अभिघ्नन्, पापानुसारेण कांश्चित् ईषत्खेदयन् आखिदन्, कांश्चित्प्रकर्षेण खेदयन् प्रखिदन्, तद्रूपायेत्यर्थः । सोऽयम् 'नमः सोमाय' इत्यादिभिरन्यतो नमस्काररूपैरेकत्रिंशद्यजुरात्मकावान्तरमन्त्रसमुदाय एको मन्त्रः । अस्य भगवानेव ऋषिः । अनुष्टुप्छन्दः । स एव देवता । रूपयौवनेत्यादयस्तृतीयानुवाकोक्ता ध्यानश्लोकाः । साम्राज्यैश्वर्यशिवपदादिफलप्रदोऽयं मन्त्रः । कृच्छ्रद्वयानुष्ठानपूर्वकं पञ्चशतजपादस्य मन्त्रस्य सिद्धिः ॥

**नमो वः किरिकेभ्यो देवानाꣳ हृदयेभ्यो नमो विक्षीणकेभ्यो नमो विचिन्वत्केभ्यो नम आनिर्हतेभ्यो नम आमीवत्केभ्यः ॥**

नमो वः किरिकेभ्य इति पञ्चमन्त्रैर्गुप्तरूपेण जगन्निग्राहकरूपा रुद्रगणा नमस्क्रियन्ते । गुप्तत्वं च देवानां हृदयेभ्य इति विशेषणद्वयेनावगम्यते। देवानामेव हृदये वर्तन्ते, न वयं जानीम इत्यर्थः । एतच्च किरिकादीनां पञ्चानामपि विशेषणम् । किरन्ति स्वेच्छया नाशयन्तीति किरिकाः । वि-

विघं क्षिण्वन्ति बाधन्ते इति विक्षीणकाः । निग्रहानुग्रहार्थम् इमे पापिनः इमे सुकृतिन इति विचिन्वन्तो विचिन्वत्काः । आङ्मर्यादायाम्, पापिष्वेव निश्चयेन हननं कुर्वन् आनिर्हतं दुःखकरणम्, तद्वन्तः आनिर्हताः । पापिष्ठानामितस्ततः अपसर्पणाय समन्ताद्विजृम्भमाणाः आमीवत्काः । एवंविधेभ्योऽयं वो नमः अस्तु । नमो वः किरिकेभ्य इत्यादिरेतदन्तः अन्यतो नमस्काररूपयजुरात्मकावान्तरमन्त्रसमुदाय एको मन्त्रः । अस्य अग्निर्ऋषिः । त्रिष्टुप्छन्दः । रुद्रो देवता । 'विश्वतः पाणिपादं तं विश्वतोऽक्षिशिरोमुखम् । ज्वलन्तं शूलमावृत्य तेजोराशिं शिवं स्मरेत्' । पराककृच्छ्रानुष्ठानपूर्वकं चत्वारिंशत्सहस्रजपान्मन्त्रसिद्धिः । सार्वभौमाधिपत्यलक्षसुवर्णवश्यवेधसुवक्ककवित्वभोगाशिवसाक्षात्कारफलप्रदोऽयं मन्त्रः ॥

इति नवमोऽनुवाकः ॥



## दशमोऽनुवाकः ॥



**द्रापे अन्धसस्पते दरिद्रन्नीललोहित । एषां पुरुषाणामेषां पशूनां मा भेर्मा-रो मो एषां किं च नाममत् ॥**

इत्थं प्रथमेन प्रसाद्य द्वितीयादिनवमान्तैरनुवाकैः सर्वेश्वरत्वसर्वात्मकत्वसर्वान्तर्यामित्वादिरूपेण भगवान्नमस्कृतः । इदानीं दशमेनानुवाकेन प्रार्थयते । तत्र ऋग्रूपा द्वादश मन्त्राः । तत्राद्यः— **द्राप इति** । द्राशब्दः कुत्सितवाची, कुत्सितां गतिमापयतीति **द्रापिः**, अन्धोऽन्नं तत्स्वामी **अन्धसस्पतिः**, **दरिद्रत्** निष्किंचनः, उमार्धदेहतया अर्धं नीलम् अर्धं लोहितम् अस्येति **नीललोहितः**, एभिः शब्दैः संबोध्याभयं प्रार्थयते— **एषामिति** । एषामस्मदीयानां **पुरुषाणां** पुत्रपौत्रादीनाम् **एषां पशूनां** गवाश्वादीनां **मा भेः** एतान्मा भीषयेत्यर्थः । **एषां** मध्ये **किंचन** एकमपि वस्तु **मारः** मा गच्छतु, मा विनश्यत्वित्यर्थः । तथा **मो आममत्** मा व्याधिग्रस्तं भवतु । अत्र मा भेः मारः मो आममत् इत्यत्र

द्रापे अन्धसस्पत इति च हेतुगर्भमिदं संबोधनद्वयम्, भय-रोगादिभिः कुत्सितगतिप्रापकस्य भयाद्यकरणेन तदनुत्पादनात् अन्नस्वामितया अन्नं दत्त्वा रक्षितुं शक्यत्वाच्च । नीललोहितेत्यनेन च उमासहितत्वोक्त्या निजदयाशक्त्यलंकृतविग्रहस्याभयारोग्यादिदानमुचितमिति दर्शितम् । एवं निग्रहानुग्रहौ कुर्वतो भगवतः न वैषम्यनैर्घृण्यलेप इति स्वयं नैष्किंचन्यार्थकेन दरिद्रदित्यनेन दर्शितम् । अस्य मन्त्रस्य पुलस्त्य ऋषिः । भैरवरुद्रो देवता । आस्तारपङ्क्तिच्छन्दः । 'आगुल्फास्तृतकञ्चुको डमरुकास्निग्धोल्लसत्कुण्डलः शूली कुण्डलितश्रवाः सुतिलको मञ्जुकणन्नूपुरः । निर्लिप्तस्वकदन्तपङ्क्तिकिरणश्वेतः कपर्दी हरो देवो भैरववेषभूषिततनुर्ध्येयो मृडानीपतिः । सकलभूतभयज्वरशान्तिधनलाभभैरवसाक्षात्कारफलप्रदोऽयं मन्त्रः । एकदिनोपवासपूर्वकमयुतजपान्मन्त्रसिद्धिः ॥

**या ते रुद्र शिवा तनूः शिवा विश्वाहभेषजी । शिवा रुद्रस्य भेषजी तया नो मृड जीवसे ॥**

अथ द्वितीयः— या ते रुद्रेति । हे रुद्र ते तव शिवा

शान्ता, शिवा शान्ततरा, या तनूः अस्ति, तया तन्वा, नः अस्मान्, जीवसे जीवितुम्, तुमर्थे च्छन्दसि सेप्रत्ययः। मृडय यथा वयं स्वस्था जीवेम तथा सुखयेत्यर्थः। कथं तन्वाः शिवत्वम्? तत्राह— विश्वाहभेषजीति। विश्वेषु सर्वेष्वपि अहःसु, भेषजी रोगदारिद्र्यादेरौषधवद्विनाशहेतुः; यस्मादेवं तस्मात् शिवा। न केवलमैहिकसुखप्रदत्वमात्रेण शिवत्वम्, किं तु मोक्षसुखप्रदत्वेनापीत्याह— शिवा रुद्रस्येति। रुद्रस्य संसाररोगवैद्यस्य तव स्वभूता भेषजी संसाररोगहरदिव्यौषधिरूपा; यस्मादेवं तस्मात् शिवा। तया नो मृडय। अस्य मन्त्रस्य ऋषिर्देवता च स्कन्दरूपी रुद्रः। 'द्रुतचामीकरप्रख्यं शक्तिपाणिं षडाननम्। मयूरवाहनारूढं स्कन्दरूपं शिवं स्मरेत्'। अष्टोत्तरशतप्राणायामपूर्वकं पञ्चसहस्रजपान्मन्त्रसिद्धिः। आभिचारभूतवैकृतदुःस्वप्नाद्युपशान्तिसुपुत्रपुष्ट्यारोग्यसंपत्तिप्रदोऽयं मन्त्रः॥

**इमाꣳ रुद्राय तपसे कपर्दिने क्षयद्वीराय प्रभरामहे मतिम्। यथा नः शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम्॥**

अथ तृतीयः— इमा रुद्रायेति । तपसे तपोबलवते, मत्वर्थीयलोपः । कपर्दिने जटाजूटवते, क्षयन्तः क्षीयमाणा वीराः प्रतिपक्षा यस्य, तस्मै क्षयद्वीराय रुद्राय, इमां मतिं बुद्धिम्, प्रभरामहे प्रकर्षेण नैरन्तर्यरूपेण धारयामः, कुर्म इति यावत् । कीदृशी मतिरित्यपेक्षायामाह— यथेति। यथा येन प्रकारेण कृतया मत्या नः अस्माकं संबन्धिने, द्विपदे पुत्रपौत्रादये, चतुष्पदे गवाश्वादये च शं सुखम्, असत् स्यात्; अस्तेः पञ्चमो लकारः, 'लेटोऽडाटौ' इत्यडागमः । न केवलमस्मदीयानामेव सुखम्, किं तु अस्मिन्ग्रामे स्थितं विश्वं सर्वमपि प्राणिजातं यथा पुष्टम् अनातुरं च स्यात्, तथा मतिं प्रभरामहे इति योजना । 'रुद्राध्यायी वसेद्यत्र ग्रामे वा नगरेऽपि वा । व्याधिदुर्भिक्षचोरादिबाधा तत्र न जायते' इति पुराणवचनमिहानुसंधेयम् । अत्र उत्तरार्ध-गतसुखप्रदत्वे हेतुगर्भाणि रुद्रायेत्यादीनि चत्वारि पदानि । तत्र रुद्रायेत्यनेन दुःखद्रावकत्वमुक्तम् । तपस इत्यनेन ज्ञान-शक्तिः, 'यस्य ज्ञानमयं तपः' इति श्रुतेः । कपर्दिन इत्यनेन तु अनन्यसाध्यकार्यनिर्वाहकत्वम्, कं गङ्गाजलं पर्दयति पालयतीति कपर्दः जटाजूटः, तद्वान्कपर्दीति शब्दार्थपर्या-लोचनयानन्यसाध्यगङ्गाधारकत्वप्रतीतेः । 'गङ्गायाः पतनं

राजन्पृथिवी न सहिष्यति । तां वै धारयितुं शक्तं नान्यं पश्यामि शूलिनः' इति रामायणादिवचनैर्गङ्गाधारणस्यानन्यसाध्यत्वावगमात् । क्षयद्वीरायेत्यनेन वीर्यशक्तिः । एतादृशस्य तद्युक्तमित्यभिप्रायः ॥

**मृडा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते । यच्छं च योश्च मनुरायजे पिता तदश्याम तव रुद्र प्रणीतौ ॥**

अथ चतुर्थः— मृडा नो रुद्रेति । हे रुद्र, नः अस्मान्, मृड इष्टार्थदानेन सुखय । उत अपि च, नः अस्माकम्, मयः मोक्षसुखम्, कृधि कुरु । ननु पापिष्ठाय तुभ्यं कथं मोक्षसुखं देयम्? अत आह— क्षयद्वीरायेति । क्षपितास्मदीयपापाय ते तुभ्यम्, नमसा नमस्कारेण, विधेम; त्वां परिचरामेत्यर्थः । तुभ्यं नमस्कारक्षपितपापस्य मे निर्विवाद एव मोक्षाधिकारः, 'एतैर्ह वा अमृतो भवति' इति श्रुतेरिति भावः । अयं च त्वत्प्रसादेन संपाद्यः भोगापवर्गरूपार्थः नेदानींतनप्राप्तः, किं तु परंपराप्राप्त इत्याह— यच्छं चेति । नः पिता मनुः, येनास्माकं मनुजा इति प्रसिद्धिः, येन च

वर्णाश्रमधर्मोपदेशेन प्रजाः पालिताः; तादृशः श्रुत्यादिप्रसिद्धमहिमा मनुः तव प्रणीतौ प्रणये प्रसादे सति, यच्छं च विषयभोगं च योश्च दुःखपृथग्भावेन मोक्षं चेति यावत्। आयजे संपादितवान्, तत्सर्वं वयं हे रुद्र, तव प्रणीतौ अश्याम अशीमहि; त्वत्प्रसादात्प्राप्नुयामेत्यर्थः। अत्र च 'इमां रुद्राय' 'मृडा नो रुद्र' इति ऋग्द्वयमेको मन्त्रः। अस्य मन्त्रस्य मार्कण्डेय ऋषिः। जगतीच्छन्दः। रुद्रो देवता। 'दिव्यसिंहासनासीनं स्तूयमानं महर्षिभिः। प्रसन्नवदनं ध्यायेत्सोमं सोमार्धशेखरम्'। एककृच्छ्रानुष्ठानपूर्वकं नवसहस्रजपात्पुरश्चरणसिद्धिः। गोतिर्यगादिशान्तिफलप्रदोऽयं मन्त्रः॥

मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम्। मा नोऽवधीः पितरं मोत मातरं प्रिया मा नस्तनुवो रुद्र रीरिषः॥

अथ पञ्चमः— मा नो महान्तमिति। हे रुद्र नः अस्माकं संबन्धिनं स्थविरं स्थविरपुरुषम्, मा रीरिषः रोगादिभिर्मा हिंसीः। उत अपि च, नः अर्भकं बालं मा

रीरिष इति सर्वत्रान्वयः । उत नः संबन्धिनम् उक्षन्तं सेचनसमर्थं पुत्रम्, उत नः उक्षितं गर्भस्थं पुत्रम्, नः पितरं मातरमपि मावधीः; नः प्रियाः तनुवः शरीराणि च मा रीरिषः । आदरातिशयात्प्रातिपर्यायं निषेधार्थकमाशब्दः । स्वकीयजनापेक्षया न इति बहुवचनम् । तथा च मम मदीयानां जनानां महान्तमर्भकादींश्च मा रीरिष इत्यर्थः । अस्य मन्त्रस्य भृगुर्ऋषिः । नन्दीश्वरात्मको रुद्रो देवता । जगतीच्छन्दः । 'बालेन्दुमकुटं देवं तरुणादित्यविग्रहम् । ध्यायेन्नन्दीश्वराकारं गणेश्वरसमावृतम्' शान्तिप्रधानोऽयं मन्त्रः । उपवासत्रयपूर्वकं पञ्चसहस्रजपान्मन्त्रसिद्धिः ॥

**मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः । वीरान्मा नो रुद्र भामितोऽवधीर्हविष्मन्तो नमसा विधेम ते ॥**

अथ षष्ठः— मा नस्तोक इति । हे रुद्र, भामितः विहिताकरणेन जातक्रोधः त्वम्, नः अस्माकम्, तोके अपत्यमात्रे तनये पुंस्प्रजायां च विषये, मा रीरिषः हिंसां मा कृथाः । एवं मा नः आयुषि मा नो गोषु मा नो अश्वेषु

रीरिषः । अथ नः अस्माकम्, वीरान् भृत्यान्, मावधीः; कथं अपचारिणि त्वयि न हिंसितृत्वम्? तत्राह—हविष्मन्त इति । हविः चरुपुरोडाशादिकं भक्त्युपहाररूपं वा, 'स्वल्पं वा परिपूर्णस्य मम किं क्रियते नरैः । किं तु सर्वात्मना देवि मया भावो हि गृह्यते' इति भगवदुक्तेः; 'तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः' इति गीतोक्तेश्च । तादृशहविर्युक्ताः ते तुभ्यम्, नमसा नमस्कारेण, विधेम परिचरेम; 'प्रणिपातप्रतीहारः संरम्भो हि महात्मनाम्' इति न्यायात्पापिष्ठोऽप्यहं दयनीय इति भावः । अस्य मन्त्रस्य ऋषिर्देवता च भगवानेव । जगतीच्छन्दः । 'दधानमेकादशधा विभज्य देहं विशुद्धस्फटिकप्रकाशम् । तेजोमयं शूलिनमिन्दुमौलिं विचिन्तयेदत्र सदैव रुद्रम्' । आयुष्यवृद्धिः राज्यवृद्धिः सुवृष्टिः द्यूते व्यवहारे चापराजयः सुवर्णसहस्रलाभः महापातकनिवृत्तिः वश्यसिद्धिः सर्वजनजय इत्यादीन्यस्य मन्त्रस्य फलान्यर्णवादिषु प्रपञ्चितानि । मन्त्रसिद्धिप्रकारोऽपि तत्रैव द्रष्टव्यः ॥

आराच्चे गोघ्न उत पूरुषघ्ने क्षयद्वीराय
सुम्नमस्मे ते अस्तु । रक्षा च नो अधि च
देव ब्रूह्यथा च नः शर्म यच्छ द्विबर्हाः ॥

अथ सप्तमः— आरात्ते इति । हे देव, गोघ्ने गोघ्नस्य, उत अपि च, पूरुषघ्ने पूरुषघ्नस्य, षष्ठ्यर्थे चतुर्थ्यौ; सकलप्राणिसंहारिण इत्यर्थः । न चास्य सर्वलोकसंहारिणः कश्चिद्विषयोऽस्तीत्याह— क्षयद्वीरायेति । देवासुरमनुष्येषु अपरिमितबलपराक्रमशालिनो ये वीराः ते सर्वेऽप्येनं प्राप्य क्षयं गच्छन्तीति क्षयद्वीरः, तस्मै क्षयद्वीराय; क्षयद्वीरस्येत्यर्थः । 'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः' इति श्रुतेः । एतादृशस्य ते तव यत्सुम्नम् अघोरं शिवरूपमस्ति, तद्रूपम् अस्मे अस्माकम् आरात् समीपे अस्तु । घोरं तु रूपं दूरत एवास्तामित्यर्थादुक्तं भवति । 'आराद्दूरसमीपयोः' इति निघण्टुः । एतदुक्तं भवति— प्रसन्नरूपेण संनिहितो भवेत्यर्थः । संनिधाय च नः अस्मान् रक्ष सर्वस्माद्दुरितादस्मान्परिपालय । तत्र कथं पापिष्ठः परिपाल्य इति देवाश्चेत्पृच्छेयुः, तदानीम् अधिब्रूहि पक्षपातवचनं कुरु । न केवलमनिष्टनिवृत्तिमात्ररूपलक्षणम्, अथापि च हे द्विबर्हाः द्वयोर्मोक्षसुखयोः बर्हयितः वर्धक, नः अस्माकं शर्म मोक्षसुखं च प्रयच्छ । अस्य मन्त्रस्य शंभुर्देवता । त्रिष्टुप्छन्दः । 'कुर्वाणं संनिधौ देव्या देवमानन्दताण्डवम् । हुताशनयनं ध्यायेत्तप्तकाञ्चनसंनि-

भम्'। आयुरैश्वर्यप्रदोऽयं मन्त्रः। त्रिरात्रोपवासपूर्वकं त्रिरात्रं निरन्तरजपान्मन्त्रसिद्धिः ॥

**स्तुहि श्रुतं गर्तसदं युवानं मृगन्न भीमम्रुपहत्नुमुग्रम् । मृडा जरित्रे रुद्र स्तवानो अन्यन्ते अस्मन्निवपन्तु सेनाः ॥**

अथाष्टमः— **स्तुहीति** । अत्र स्वात्मैव संबोध्यते, हे आत्मन् भगवन्तं स्तुहि; यद्वा हे वचः स्तुहीति । तत्र स्तुतिहेतुभूतं पारम्यं दर्शयति— **श्रुतमिति** । परमेश्वरत्वेन सर्वलोकप्रसिद्धमित्यर्थः । न चैतादृशे कथं मदीयस्तोत्रमुपस्थास्यत इति शङ्क्यम्, यतः गर्तसदं गर्ते हृदयकुहरे सीदतीति **गर्तसदम्**, 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' इति स्मृतेः । न केवलं पारम्यमात्रेण स्तोतव्यता, किं तु दिव्यमङ्गलविग्रहतयात्यद्भुतत्वेनापीत्याह— **युवानमिति** । नित्यतारुण्यसुन्दरमित्यर्थः । एवं विहितस्य स्तोत्रस्य करणाकरणयोरिष्टानिष्टप्राप्तिं दर्शयन्प्रथममकरणेऽनिष्टमाह— **उपहत्नुमिति** । वर्णाश्रमधर्माननुष्ठानेन निजाज्ञातिलङ्घिनामभक्तानामुपहत्नुम् उपसंहर्तारमित्यर्थः । अत्र दृष्टान्तमाह— **मृगन्न भीममिति** । उपमानार्थो नकारः, मृगमिव भीमं

गजविदारणायोद्यतसिंहवदतिभयंकरमित्यर्थः । मृगन्नेति दृष्टान्तग्रहणान्मृगशब्दवाच्यस्य सिंहस्य स्वापेक्षयाधिकबलेन शरभेणेव भगवतोऽपि स्वापेक्षयाधिकबलेन केनचिद्भिभवे तस्यैव स्तोतव्यता स्यादिति शङ्कापिशाचिकोच्चाटनायोक्तम्— उग्रमिति । केनाप्यनभिभवनीयमित्यर्थः । 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति, 'न वा ओजीयो रुद्र त्वदस्ति' 'तमीश्वराणां परमं महेश्वरम्' इत्यादिश्रुतिशतप्रसिद्धे निःसमाभ्यधिकमहाबलोन्नते सकललोकेश्वरेश्वरे कुतोऽभिभवशङ्केति भावः । एवं स्तोत्राकरणे अनिष्टमुक्त्वा करणेऽपीष्टं दर्शयन्भगवन्तं प्रार्थयते— मृडेति । हे रुद्र, स्तवानः स्तूयमानः त्वम्, जरित्रे जरणशीले अस्मिञ्शरीरे स्थितानस्मान् मृड मृडय । यथाहम् आपुरुषायुषमरोगदृढगात्रः स्याम्, यथा च तदनन्तरमजरामरणो मुक्तः स्याम्, तथा सुखयेत्यर्थः । एतत्प्रातिकूलास्तव याः सेनाः सन्ति 'नमो रुद्रेभ्यः' इत्यग्रे वक्ष्यमाणाः 'त्रिशश्चयश्च गणिनो रुजन्तः' इत्यादिषु प्रसिद्धाः, ताः सेनाः अस्मत् अस्मत्तः, अन्यम् अस्मद्वैरिणं पापं निवपन्तु नाशयन्तु । अस्य मन्त्रस्य वैयाघ्र ऋषिः । त्रिष्टुप्छन्दः । श्रीरुद्रो देवता । 'उद्यद्भास्करकोटिप्रकाशमाकाशगं भीमम् । भीति-

भ्रमभयवरदं ध्यायेद्रुद्रं सुरौघनुतम्’। एकरात्रोपवासपूर्वकं त्रिरात्रसततजपात्पुरश्चरणसिद्धिः। शत्रुनाशनप्रदोऽयं मन्त्रः॥

**परि णो रुद्रस्य हेतिर्वृणक्तु परि त्वे-षस्य दुर्मतिरघायोः। अव स्थिरा मघव-द्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृडय॥**

अथ नवमः— परि णो रुद्रस्येति। रुद्रस्य हेतिः आयुधं नः अस्मान् परिवृणक्तु परिवर्जयतु, कदाचिदपि मा विध्यत्वित्यर्थः। हन्तुः हननबुद्धौ सत्यां हेतिपरिवर्जनमशक्यमिति तद्बुद्धेः परिवर्जनं प्रार्थयते— परि त्वेषस्येति। अघायोः अघं पापं क्रोधसाधनत्वेन इच्छतीति अघायुस्तस्य, परि परितः, त्वेषस्य क्रोधेन दीप्तस्य रुद्रस्य दुर्मतिः हननबुद्धिः, साप्यस्मान्वृणक्तु। विहिताकरणनिन्दितानुष्ठानरूपात्पापात्परमेश्वरस्य क्रोधः, ततो हन्तव्यताबुद्धिः, ततस्तु ऐहिकामुष्मिकविविधदुःखसाधनदेशकालपुरुषादिनानापदार्थरूपैः परमेश्वरायुधैः वेधः, ततो दुःखानुभव इति क्रमः; तदत्र पापादिदुःखानुभवान्तं सर्वमपि प्रार्थितं भवति। ननु अमोघा मदीयहेतिर्मतिश्च, कथं तत्परिहारः स्यात्? तत्राह— अव स्थिरेति। हे मीढ्वः प्रणतकामवर्षिन्निति हेतुगर्भं सं-

बोधनम्, तव स्थिरा अमोघा हेतिः मतिश्च, तां मघवद्भ्यः मघवदर्थं स्तुतिनमस्कारादिरूपत्वदीयमघकृतामस्माकमर्थे अवतनुष्व अवततां अवरोपितां कुरु; अमोघापि ते तव हेतिः मतिश्च प्रणतपालकेन त्वया मयि परिहरणीयेत्यर्थः। किंच हे मीढ्वः नः तोकाय अपत्यमात्राय विशिष्य तनयाय च मृडय सुखं देहि । अस्य मन्त्रस्य भगवानेव ऋषिः देवता च । त्रिष्टुप्छन्दः । ध्यानम्— 'गजचर्मावृततनुं स्फुरत्प्रहरणोज्ज्वलम् । सर्वपापहरं ध्यायेद्देवं कुञ्जरभेदिनम्' । सुपुत्रादिफलप्रदोऽयं मन्त्रः । एककृच्छ्राचरणपूर्वकं नवदिनेषु प्रतिदिनं पञ्चसहस्रजपात्सिद्धिः ॥

**मीढुष्टम शिवतम शिवो नः सुमना भव। परमे वृक्ष आयुधं निधाय कृत्तिं वसान आचर पिनाकं बिभ्रदागहि ॥**

अथ दशमः— मीढुष्टमेति । हे मीढुष्टम अतिशयेन प्रणतकामवर्षिन्, हे शिवतम अतिशयेन शिवंकर इति च हेतुगर्भं संबोधनम् । नः अस्माकम्, शिवः शिवंकरः, सुमनाः शोभनमनस्कः अस्माकं प्रीतश्च भव। प्रीतस्य तवेदं लक्षणमित्याह— परमे वृक्षेति । परमे अत्युन्नते वृक्षे वटादौ; श्रूयते हि कैलासे शतयोजनोन्नतः पञ्चसप्तत्यधिक-

योजनशतायतश्च भवदावासो दिव्यवटवृक्षः— 'स योजनशतोत्सेधः पादोनद्विशतायतः । पर्यक्कृतामलच्छायो निर्णिक्तस्तापवर्जितः ॥ तस्मिन्महामुमुक्षूणां शरणे सुवटे सुराः । ददृशुः शिवमासीनम्' इति । तस्मिन्परमे वृक्षे त्वदीयम् आयुधम् अतिभीषणं च निधाय, यत्र निहिते वयं न पश्यामः, तत्रावस्थाप्य आचर आगच्छ; आगच्छंश्च त्वं कृत्तिं व्याघ्रचर्म, वसानः परिदधानः पिनाकं बिभ्रत् भूषणार्थं धनुर्मात्रं हस्ते धारयन् आगहि समीपं आगच्छ; 'पिनाकहस्तः कृत्तिवासाः' 'प्राणेश्वरः कृत्तिवासाः पिनाकी' इति श्रुतेः । तादृशमेव तव रूपं बहुश्रेयः प्रशस्यते । अयं भावः— परमेश्वरस्य हि चर्मपरिधानं न वस्त्रालाभप्रयुक्तम्, ब्रह्मेन्द्रादिनिखिलैश्वर्यप्रदे नवनिधिप्रणीतकुबेराद्यनुचरवति भगवति तदलाभोक्तेः परिहासास्पदत्वात्; किं तु निजानन्दपरिपूर्णत्वप्रयुक्तविषयवैतृष्ण्यं प्रकटयितुं विषयलम्पटजनादरणीयदिव्याम्बरस्थाने चर्माम्बरधारणम् । तदेतद्भागवते प्रतिपादितम्— 'हसन्ति यस्याचरितं हि दुर्भगाः स्वात्मामृतस्याविदुषः समीहितम् । यैर्वस्त्रमाल्याभरणानुलेपनैः श्वभोजनं स्वात्मतयोपलाल्यते' इति स्वात्मारामस्य भगवतः समीहितं विषयवैतृष्ण्यस्फुटीकरणाभिप्राय-

मजानाना देहात्मवादिनो दुर्भगा अभाग्याः, दुष्टभगजन्याः संकरयोनिजाता इति यावत्; ते परमेश्वरं चर्माम्बरकपालभस्माङ्गरागादिपरीतं हसन्तीति श्लोकार्थः । महिम्नस्तवेऽप्युक्तम्— 'महोक्षः खट्वाङ्गम्' इत्यादि, 'न हि स्वात्मारामं विषयमृगतृष्णा भ्रमयति' इत्यन्तेन । तथा च स्वात्मारामस्य सर्वविषयोपशान्तिसूचकं कृत्तिपरिधानं प्रीतिलक्षणमिति । पिनाकं बिभ्रदित्यनेन पिनाकपदप्रवृत्तिनिमित्तं पातृत्वं विवक्षितम्, 'पिनाकादयश्च' इति आकप्रत्ययस्य इत्वस्य नुगागमस्य च प्रतिपादनात् । रक्षणप्रधानस्य पिनाकस्य धारणं प्रीतिचिह्नमिति । अस्य मन्त्रस्य वैराज ऋषिः । त्रिष्टुप्छन्दः । शंभुर्देवता । ध्यानम्— 'मङ्गलायतनं देवं युवानमतिसुन्दरम् । ध्यायेद्वनचराकारमागच्छन्तं पिनाकिनम्' । राजभयतस्करोपद्रवप्राणसंशयादिविपत्परिहारप्रधानोऽयं मन्त्रः ॥

विकिरिद विलोहित नमस्ते अस्तु भगवः । यास्ते सहस्रꣳ हेतयोऽन्यमस्मन्निवपन्तु ताः ॥

अथैकादशः— विकिरिदेति । विविधं किरन्ति हिंसन्तीति विकिरयः पापरोगसंसारदारिद्र्यादयः, तान् द्यति

खण्डयतीति विकिरदः, हे विकिरिद ; हे विलोहित लोहितवर्ण, कर्पूरगौरेति यावत् । अत एव पञ्चाक्षरध्याने तान्त्रिकाः स्मरन्ति— 'ध्येयो मुक्तापरागामृतरसघटिताद्रिप्रभः' इति ; शुद्धसत्त्वाकारेति यावत् । हे भगवः षड्गुणैश्वर्यसंपन्न, ते तुभ्यं नमः अस्तु । एतच्च संबोधनत्रयमुत्तरार्धप्रतिपादितार्थे हेतुगर्भम् । इत्थं नमस्कृत्य प्रार्थयते— यास्त इति । याः सहस्रं हेतयः अनन्तान्यायुधानि सन्ति, ताः सर्वाः अस्मत् अस्मत्तः अन्यं पापं निवपन्तु नाशयन्तु ; न त्वस्मानित्यर्थः । अस्य मन्त्रस्य पुलस्त्य ऋषिः । त्रिष्टुप्छन्दः । शंभुर्देवता । 'प्रसन्नवदनं शान्तं चरितोद्वाहमण्डनम् । अम्बया सहितं ध्यायेत्सुरसङ्घैरभिष्टुतम्' । महाजनाविरोधशत्रुजयभयपरिहारादीन्यस्य फलानि । त्रिरात्रचरुभोजनपूर्वकदशसहस्रजपः, तदनन्तरं दशसहस्रं शिवप्रदक्षिणानि । एवमस्य मन्त्रस्य पुरश्चरणविधिः ॥

**सहस्राणि सहस्रधा बाहुवोस्तव हेतयः । तासामीशानो भगवः पराचीना मुखा कृधि ॥**

अथ द्वादशः— सहस्राणीति । बाह्वोरिति द्विवचनमविवक्षितम्, बाहुष्वित्यर्थः । हे भगवः भगवन्, तव

बाह्वोः; यद्वा अनन्तबाहोरपि धनुर्बाणव्यापृततद्बाहुद्वयाभिप्रायेण द्विवचने। हे भगवन् बाह्वोः हेतयः आयुधानि, सहस्राणि सहस्रधा च विद्यन्ते। आनन्त्यवाची सहस्रशब्दः– धनुः खड्गं शूलमित्येवंविजातीयधर्मिस्वरूपभेदेन अनन्तानि, तेष्वप्येकैकस्मिन्ननेकभेदादनन्तप्रकाराणि चेत्यर्थः । श्रूयते हि— 'शूलाच्छूलसहस्राणि निष्पतन्त्यस्य तेजसा' इति। तासां हेतीनां मुखा मुखानि पराचीना कृधि पराङ्मुखानि कुरु, यतस्त्वम् ईशानः सर्वेश्वरः; प्रयुक्तानामप्युपसंहारे शक्तोऽसीति भावः। अस्य मन्त्रस्य नारद ऋषिः। श्रीरुद्रो देवता। अनुष्टुप्छन्दः। ध्यानम्— 'सर्वपापहरं देवं सर्वाभरणभूषितम्। सर्वायुधधरं देवं सर्वलोकमहेश्वरम्'। उपद्रवपरिहारप्रधानोऽयं मन्त्रः। एककृच्छ्राचरणपूर्वकं सहस्रजपान्मन्त्रसिद्धिः ॥

इति दशमोऽनुवाकः ॥



## एका॰ शोऽ॒ वाकः ॥



**स॒ स्राणि सहस्रशो ये रुद्रा अधि-**
**॒ म्याम् । तेषाँ स॒ स्रयोजनेऽव धन्वानि**
**तन्मसि ॥**

एवं दशमेऽनुवाके भगवान् प्रार्थितः । एकादशे तु तदं-
शभूता रुद्राः प्रार्थ्यन्ते । सन्ति हि सर्वलोकेश्वरस्य साम्ब-
परब्रह्मणोंशभूतास्तत्तल्लोकगततत्तत्प्राणिकर्मानुगुणतत्तल्लोकनि-
ग्रहानुग्रहार्थं तत्तल्लोकेश्वरत्वेन भगवता स्थापिताः निखिल-
ब्रह्माण्डमण्डलाधिष्ठातारः निरतिशयमहिममहासमुद्राः रुद्राः
श्रुताः— ‘य एको रुद्र उच्यते असंख्याताः सहस्राणि’
इति । उपबृंहिताश्च महाभारते— ‘स देवः सर्वभूतानां
महादेवः सनातनः । असंख्याताः सहस्राणि रुद्राणां स्थान-
मव्ययम्’ इति । शैवपुराणेषु च— ‘य एको रुद्र इत्युक्तः
स विश्वमधितिष्ठति । असंख्याताः सहस्राणि रुद्रो भूत्वाखिलं
जगत्’ इति । तथा नित्यमुक्ता ‘निरुपमा निर्द्वन्द्वा निरुप-
प्लवाः । सशक्तयः सानुचराः सर्वलोकनमस्कृताः ॥ सर्वेषा-

मेव लोकानां सृष्टिसंहरणक्षमाः । परस्परानुरक्ताश्च परस्पर-नमस्कृताः ॥ शिवप्रियतमा नित्यं शिवलक्षणलक्षिताः । सौ-म्या घोरास्तथा मिश्राश्चान्तरालद्वयात्मकाः ॥ विरूपाश्च सु-रूपाश्च नानारूपधराः प्रभोः । तस्य पारिषदा दिव्या नाना-रूपधराः प्रभोः ॥ वामना जटिला मुण्डाः कम्बुग्रीवा महोदराः । शूलहस्ताः खड्गहस्ताः सर्वोच्छ्रितकिरीटिनः ॥ हन्तारो द्विषतां सैन्यं प्रसह्यासह्यविक्रमाः । कामकारकराः सिद्धास्त्रैलोक्यस्येश्वरेश्वराः ॥ तैरात्मभूतैर्भगवान्पार्वत्या च महेश्वरः । सर्वभूतगणैर्भुङ्क्ते भूतभव्यभवत्प्रभुः' इति । अत्र 'सौम्या घोरास्तथा मिश्राः' इत्यनेन 'अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः' इत्युक्ताः रुद्राः प्रदर्शिताः । तेषां च निग्रहा-नुग्रहकर्तृत्वरूपं घोरत्वाघोरत्वरूपं च लैङ्गे प्रतिपादितम् । तत्र हि— 'स्मरणादेव रुद्रस्य संप्राप्तास्ते गणेश्वराः । असं-ख्याता महात्मानः' इत्युपक्रम्योक्तम्— 'ते गणेशा महा-सत्त्वाः सर्वलोकमहेश्वरम् । प्रणम्य देवं देवीं च इदं वचन-नमब्रुवन् ॥ किमर्थं च स्मृता देव आज्ञापय महाप्रभो । किं सागरान्शोषयामो यमं वा हन्म किंकरैः ॥ हन्म मृत्युमु-तामृत्युं विवस्वन्तं तु पद्मजम् । बद्ध्वेन्द्रं सह देवैश्च सह

विष्णुं सनातनम् ॥ आनयामोऽथ संक्रुद्धा दैत्यान्वा सह दानवैः । कस्याद्य व्यसनं घोरं करिष्यामस्तवाज्ञया ॥ कस्य वाद्योत्सवं देव देवकामसमन्वितम्' इति । 'तस्य पारिषदा दिव्या नानारूपधराः प्रभोः' इति भारतवचनेन तु 'दिव्या गणा बहुरूपाः पुराणाः' इति श्रुत्युक्ताः रुद्राः प्रदर्श्यन्ते । एवं सामवेदेऽपि देवव्रताख्ये सामनि ये देवा दिविषदस्थेत्यादिना तत्तल्लोकस्थिता रुद्राः प्रतिपादिताः । शैवपुराणे चोपबृंहिताः— 'ते हि साक्षाद्दिविषदस्त्वन्तारिक्षसदस्तथा । पृथिवीषद इत्येवं देवदेवव्रतस्तुताः' इति । तेषां च तत्तल्लोकाधिपरुद्राणाम् 'अमृतस्य पुत्रा आये धामानि दिव्यानि तस्थुः' इत्यादिश्वेताश्वतरप्रसिद्धानि तानि धामानि तत्तन्नामधेयानि तदीयगणकोटिसंख्यातानि चरित्राणि चेत्यतत्सर्वं शिवपुराणे प्रपञ्चितम् । विस्तरभयान्नेह लिख्यन्ते । तानेतान्रुद्रानधिकृत्यायमनुवाकः । अत्र च त्रयोदश मन्त्राः । तत्र आद्यः— सहस्राणीति । अनेकसहस्रसंख्यापरिमाणाः, ते च सहस्रशः सहस्रं सहस्रं भूत्वा अवस्थिताः । एवंभूता ये रुद्राः अधिभूम्यां भूमेरुपरि तदीश्वरत्वेन वर्तन्ते, अधिरैश्वर्ये; तेषां धन्वानि धनूंषि सहस्रयोजने अस्मत्तः सहस्रयोजनव्यवहितदेशे अतिदूरे अवत-

न्मसि अवततज्यानि कुर्मः; स्तुतिनमस्कारैरिति शेषः । ते अस्मान् हिंसितुं धनुरारोपणं न कुर्वन्त्वित्यर्थः ॥

**अस्मिन्महत्यर्णवेऽन्तरिक्षे भवा अधि ।**

अथ द्वितीयः— अस्मिन्महतीति । अस्मिन्महति परिदृश्यमाने महति अर्णवे अन्तरिक्षे च अधि उपरि वर्तमाना अर्णवान्तरिक्षयोः अधीश्वराः ये भवा रुद्राः, तेषां सहस्रयोजने अवधन्वानि तन्मसीति योजना । अत्र अस्मिन्महत्यर्णवेऽन्तरिक्षे इत्यर्णवान्तरिक्षयोः प्रत्यक्षोपलभ्यमानमहत्वोक्तिः । यदाहुः— 'गगनं गगनाकारं सागरः सागरोपमः' इति । तेन च तदधिष्ठातॄणां रुद्राणां महत्त्वातिशयो युज्यते । एतन्मन्त्रमारभ्य नवमान्तेषु मन्त्रेषु 'तेषां सहस्रयोजने' इत्यनुषङ्गः; तदनुषङ्गद्योतनायैव दशमे मन्त्रे 'तेषाम्' इत्यादि पुनः पठितम् ॥

**नीलग्रीवाः शितिकण्ठाः शर्वा अधः-क्षमाचराः ॥**

अथ तृतीयः— नीलग्रीवा इति । कालकूटादनादुपरि परमेश्वरस्वरूपाः नीलग्रीवाः, ततः पूर्वं तत्स्वरूपाः श्वेतग्रीवाः शितिकण्ठाः इत्यवस्थाभेदेन नीलग्रीवत्वशितिकण्ठत्वे

पूर्वमेव व्याख्याते । एतादृशा ये शर्वाः रुद्राः अधःक्षमा-चराः भूमेरधः पाताललोकेषु तदीश्वरत्वेन वसन्ति, तेषा-मित्यादि पूर्ववत् ॥

नीलग्रीवाः शितिकण्ठा दिवꣳ रुद्रा उपश्रिताः ॥

अथ चतुर्थः— नीलग्रीवा इति । दिवमुपश्रिताः इ-न्द्रादीनां नियन्तृतया स्वर्गमुपसंप्राप्ताः; शेषं पूर्ववत् । 'सहस्राणि सहस्रशः' इत्यारभ्य एतदन्तम् ऋक्चतुष्टयमेको मन्त्रः । अस्य दुर्वासा ऋषिः । अनुष्टुप्छन्दः । रुद्रो देवता । 'दंष्ट्राकरालवदनं भीषणं रक्तमूर्धजम् । त्रिनेत्रं त्रिशिखं दीप्तं ध्यायेद्भुजगभूषणम्' । शत्रुनाशनफलप्रदोऽयं मन्त्रः । चान्द्रा-यणपूर्वकं पञ्चसहस्रजपात्पुरश्चरणसिद्धिः ॥

ये वृक्षेषु सस्पिञ्जरा नीलग्रीवा विलो-हिताः ॥

अथ पञ्चमः— ये वृक्षेष्विति । यथा लोकेषु स्वामित्वेन भूमौ रुद्रा अवस्थिताः, तथा वृक्षेष्वपि । तत्र केचित् स-स्पिञ्जराः बालतृणवत्पिञ्जरवर्णाः, केचित् विलोहिताः विशेषेण रक्ताः रक्तवर्णाः; एतादृशा ये नीलग्रीवाः, तेषा-मिति पूर्ववत् ॥

ये भूतानामधिपतयो विशिखासः कपर्दिनः ।

अथ षष्ठः— ये भूतानामिति । भूतानां बालग्रहादिभूतगणानाम् अधिपतयः ये रुद्राः, तेषु केचित् विशिखासः शिखारहिताः, केचित्तु कपर्दिनः जटाबन्धोपेताः; तेषामिति ॥

ये अन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् ॥

अथ सप्तमः— ये अन्नेष्विति । अन्नेषु अदनीयेषु वस्तुषु गूढत्वेन तिष्ठन्तो ये रुद्राः विविध्यन्ति अन्नवैषम्यादिना विविधव्याध्युत्पादनेन जनान् बाधन्ते, तथा पात्रेषु पातव्येषु नीरक्षीरादिषु गूढत्वेन तिष्ठन्तो ये रुद्राः पिबतः जनान् विध्यन्ति; तेषामिति पूर्ववत् । अत्र ये वृक्षेषु' इत्यारभ्य एतदन्तम् ऋक्त्रयमेको मन्त्रः । ऋष्यादिकं सर्वं पूर्ववत् ।

ये पथां पथिरक्षय ऐलबृदा यव्युधः ॥

अथाष्टमः— ये पथामिति । अत्र पथिशब्देन लौकिकवैदिकमार्ग उच्यते, पथिरक्षय इति समस्तस्यापि रक्षिपदस्य पथामित्यनेनाप्यन्वयः—पथां रक्षयः पथिरक्षय इति,

लौकिकवैदिकमार्गरक्षका इत्यर्थः । एतदेव रक्षकत्वं विशेषणद्वयेनोपपादयति— ऐलबृदा यव्युध इति । इरा-शब्दोऽन्नवाची, इराणां समूह ऐरम्, ऐरमेव ऐलम्, तद्बिभर्तीति ऐलभृतः, त एव ऐलबृदाः ; भकारस्य बकारः तकारस्य दत्वम् अकारस्य दीर्घश्छान्दसः अन्नदातार इत्यर्थः । यौति मिश्रीभवति पापेनेति युः पापिष्ठः, युभिर्युध्यन्तीति यव्युधः, पूर्ववदेव छान्दसी रूपनिष्पत्तिः । पापिष्ठानां निरोद्धार इत्यर्थः । एवं च लौकिकवैदिकमार्गरक्षकत्वं नाम सत्पुरुषान् तेषु मार्गेषु प्रवर्त्य तेषां तत्फलैरन्नाद्यैः संयोजनम्, पापिष्ठानां तत्र निरोधनमित्येवंरूपमिति भावः । एतादृशा ये रुद्राः, तेषाम् ॥

**ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिणः ॥**

अथ नवमः—ये तीर्थानीति । सृकावन्तः सृकाख्यायुधवन्तः दीर्घश्छान्दसः, निषङ्गिणः खड्गवन्तश्च ये रुद्राः, तीर्थानि गङ्गादीनि रक्षितुं प्रचरन्ति केषांचित्तीर्थफलं दातुं केषांचित्तन्निरोद्धुं च, तेषाम् । अत्र ये पथां ये तीर्थानीति ऋग्द्वयमेको मन्त्रः । अस्य देवल ऋषिः । अनुष्टुप्छन्दः । रुद्रो देवता । सुपुत्रफलप्रदोऽयं मन्त्रः । कृच्छ्राचरणपूर्वकं

पञ्चसहस्रजपात्पुरश्चरणसिद्धिः । अन्यत्सर्वम् 'सहस्राणि सहस्रशः' इत्यत्रोक्तम् ॥

य एतावन्तश्च भूयाꣳसश्च दिशो रुद्रा वितस्थिरे । तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥

अथ दशमः— य एतावन्त इति । 'सहस्राणि सहस्रशः' इत्यारभ्य यावन्तोऽमी रुद्रा उक्ताः एतावन्तश्च, इतोऽपि भूयांसः बहुतराः इयत्तामतीत्य वर्तमानाः ये रुद्राः दिशो रुद्रा वितस्थिरे सर्वा दिशो व्याप्य स्थिताः, तेषां सहस्रयोजनेऽव धन्वानि तन्मसीति । अत्र ऋष्यादिकं पूर्ववत् ॥

नमो रुद्रेभ्यो ये पृथिव्यां येऽन्तरिक्षे ये दिवि येषामन्नं वातो वर्षमिषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमस्ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि ॥

अथ 'नमो रुद्रेभ्यो ये पृथिव्याम्' इत्यादिभिर्मन्त्रैः पृथिव्यन्तरिक्षद्युलोकस्थितान् रुद्रान्नमस्कृत्य स्वस्य सुखं द्वेषिणां दुःखं च प्रार्थयते । अत्रेत्थं मन्त्रत्रयविभागः— 'नमो रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवः तेभ्यो दश प्राचीर्दश....दधामि' इत्येको मन्त्रः । 'नमो रुद्रेभ्यो ये अन्तरिक्षे येषां वात इषवः तेभ्यो दश प्राचीर्दश....दधामि' इति द्वितीयो मन्त्रः । 'नमो रुद्रेभ्यो ये दिवि येषां वर्षमिषवः तेभ्यो दश प्राचीर्दश....दधामि' इत्येको मन्त्रः । तत्र प्रथमस्यायमर्थः— नमो रुद्रेभ्यो अस्तु ये पृथिव्यां वर्तन्ते, येषां च अन्नम् इषवः इषुस्थानीयं हिंसासाधनम्; अपथ्यान्नभक्षणम् अतिमात्राशनं च कारयित्वा तेन रोगानुत्पाद्य कांश्चिद्बाधन्ते, कांश्चिदन्नविघातेन क्षुधमुत्पाद्य पीडयन्ति, कांश्चिदन्नार्थं चौर्यादि कारयित्वा वधाधिकं प्रापयन्ति; एवं पापिष्ठहिंसायाम् अन्नम् निमित्तमिति तदेव एषामिषवः । तेभ्यो रुद्रेभ्यो दश प्राचीः प्राङ्मुखाञ्जलिरूपा अङ्गुलीः करोमि । प्राङ्मुखत्वेन अञ्जलीकरणे हि दशाङ्गुलयः प्रागग्रा भवन्ति । एवं दक्षिणाद्यूर्ध्वान्तेषु द्रष्टव्याः । ईदृशाञ्जलिरूपाङ्गुल्युपलक्षितान्नमस्कारान्करोमीत्यर्थः । अनेन कायिकनमस्कारो दर्शितः, तेभ्यो नम इति मानसः, नमो रुद्रेभ्यो

इति मन्त्रस्यादौ यो नमस्कारः स वाचिकः । एवं त्रिकरणैर्नमस्कुर्वाणाः वयं यं द्विष्मः यश्च नो अस्मान् द्वेष्टि, तम् अस्मत्पापतत्फलतदुपकरणरूपं द्वेषिणं हे रुद्राः, वः युष्माकं जम्भे विदारितास्ये दधामि स्थापयामि ; तं भक्षयतेत्यर्थः । एवं द्वितीयतृतीययोरपि योजनीयम् । ये अन्तरिक्षे रुद्रा वर्तन्ते येषां वात इषवः बाणाः, वायुविकारप्रयुक्तविविधरोगोत्पादनेन तीव्रतरवायूत्पादनादिभिश्च पापिनो हिंसन्तीत्यर्थः । ये दिवि रुद्राः दिवि वर्तन्ते येषां वर्षमिषवः अतिवृष्ट्यनावृष्ट्यादिभिः हिंसन्तीत्यर्थः, शेषं पूर्ववदिति सर्वं रमणीयम् । अत्र 'नमो रुद्रेभ्यः' इत्यादि समाप्त्यन्तं यजुस्त्रयमेको मन्त्रः । अत्र देवता ऋषिश्च रुद्र एव । ध्यानं तु— 'सहस्राणि सहस्रशः' इत्यत्र उक्तमेव ग्राह्यम् । अन्नसमृद्धिप्रदोऽयं मन्त्रः । पुरश्चरणादिप्रकारः, कृत्योत्पादनजातिस्मरत्वादिफलभेदाश्च रुद्रकल्पादिप्रपञ्चिता द्रष्टव्याः ॥

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु । तमु ष्टुहि यः स्वि-

षुः सुधन्वा यो विश्वस्य क्षयति भेषजस्य । यक्ष्वामहे सौमनसाय रुद्रं नमोभिर्देवमधरं दुवस्य । अयं मे अस्तु भगवानयं मे भगवत्तरः । अयं मे विश्वभेषजोऽयं शिवाभिमर्शनः । ये ते सहस्रमयुतं पाशा मृत्यो मर्त्याय हन्तवे । तान्यज्ञस्य मायया सर्वानव यजामहे । मृत्यवे स्वाहा मृत्यवे स्वाहा । ओं नमो भगवते रुद्राय विष्णवे मृत्युर्मे पाहि ॥

इति श्रीमत्परमहंसपरिव्राजकसार्वभौम

श्रीमदद्वैतविद्याप्रतिष्ठापक

श्रीमदभिनवशंकरभगवता कृतं

श्रीरुद्रभाष्यं संपूर्णम् ॥

